अर्पणपत्रम् ।

श्रीखेङ्गारजिनामकायविदुषेराजाऽधिराजाऽयते
धर्मैष्ठायनितान्तशान्तवपुषेवश्येन्द्रियायप्रभो ।
कच्छंरामयुधिष्ठिरादिवदिमंन्यायेनसंशासते
सुप्रीतेनमयार्पिताऽतिसुखदाव्याख्यानमुक्तावली ॥ १ ॥

दमदानदयाशमशौर्य्यरतःसुमतिश्च महामहिमामहितः । जगतामुपकारनिमित्तमिमंवपुषाविमुदाकुरुतेश्रमकम् । ॥ २ ॥ सकलंगुणसङ्गमहंभवतांप्रतिपत्तुमलंनृपवर्य्यनयम् । वपुषिप्रबिभर्षिमुदासततंजलधेरिवरत्नचयंविपुलम् ॥ ३ ॥ जगतामुपकारायकुरुषेत्वंधनव्ययम् । नमनोजविकारश्चदृश्यतेत्वयिसन्मते ॥ ४ ॥ आनन्दसङ्गमतिमात्रमवाप्यशश्वद्भृत्यैश्चबान्धवगणैःसुयुतोमहौजाः । लोकोपकारनिरतश्चिरायुरस्तुस्वाम्येवमिच्छति सदाजगतामधीशात् ॥५॥ गुणैर्गरिष्ठंनयधर्मदक्षंसत्कर्मणांप्रेरकछोटलालम् । सन्मन्त्रिणंतेप्रसमीक्ष्यनित्यंपरंप्रसन्नोऽस्मि नरेन्द्रवर्य्य ॥ ६॥ छोटालालमहोदयोऽतिनतिमान्शुद्धोऽधिकारीसुधीः श्रीमद्राज्यविभूषणः सुनिपुणोविद्वज्जनानांप्रियः । धैर्यौदार्य्ययुतःप्रजासुखकरोराजंस्त्वयामानितःआशासेजगदीशतोऽस्तुभवतांसङ्गः सदातन्निभैः ॥७॥

# व्याख्यानमुक्तावल्याविषयानुक्रमः।

ओ३म्

# व्याख्यानमुक्तावली.

## परमेश्वरमहिमा. १

ओं नमः परमात्मने । अशुभानि निराचष्टे तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥ १ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥ २ ॥ स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ ३ ॥ यो ब्रह्माणं विदधाति[1] पूर्वं यो वै वेदांश्च प्रहिणोति[2] तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ४ ॥ तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ॥ ५ ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चे

१ ससर्ज. २ प्रददौ.

ता केवलो निर्गुणश्च ॥ ६ ॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ७ ॥ अणोरणीयान् महतो महीयानात्माऽस्यजन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ ८ ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ९ ॥ न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ १० ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ११ ॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ १२ ॥ नमस्ते सते ते जगत्कारणाय नमस्ते चिते सर्वलोकाश्रयाय । नमोऽद्वैत-

तत्त्वाय मुक्तिप्रदाय नमो ब्रह्मणे व्यापिने शाश्वताय ॥ १३ ॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्पालकं स्वप्रकाशम् । त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पम् ॥ १४ ॥ भयानां भयं भीषणं भीषणानां गतिः प्राणिनां पावनं पावनानाम् । महोच्चैः पदानां नियन्तृ त्वमेकं परेषां परं रक्षणं रक्षणानाम् ॥ १५ ॥ वयं त्वां स्मरामो वयं त्वां भजामो वयं त्वां जगत्साक्षिरूपं नमामः । सदेकं निधानं निरालम्बमीशं भवाम्भोधिपोतं शरण्यं व्रजामः ॥ १६ ॥ विदुर्यं न चित्तेन्द्रियाणीन्द्रियेशं विजानाति यस्तानि नित्यं नियन्ता । जगत्साक्षिणं व्यापकं विश्ववन्द्यं चिदानन्दरूपं तमीशं प्रपद्ये ॥ १७ ॥ अणोरणीयान्महद्भ्यो महीयान् रवीन्दुग्रहव्योमगोलादिकर्त्ता । य ईशो हि सृष्ट्यादिमध्यान्तसंस्थश्चिदानन्दरूपं तमीशं प्रपद्ये ॥ १८ ॥ यतो जायते विश्वमेतत्समस्तं स्थितं यत्र यस्मिँल्लयं याति काले । अनादिं विभुं चादिमध्यान्त-

१ पृथिवी. २ नक्षत्रगोलादिकर्ता.

शून्यं चिदानन्दरूपं तमीशं प्रपद्ये ॥ १९ ॥ वशे यस्य विश्वं समस्तं सदास्ते यदाभासतो भाति यद्वै विचित्रम् । न जानन्ति यं तत्त्वतो योगिनोऽपि चिदानन्दरूपं तमीशं प्रपद्ये ॥ २० ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ २१ ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देव देव ॥ २२ ॥ यथा धूमेनाग्निं ह्यनुमितिपदं तर्करसिको घनोन्नत्या वृष्टिं घटपटमठैश्चापि रचकम् । तथाऽनन्तां दृष्ट्वा नरपशुलताद्यैश्च सहितां त्रिकालाबाध्यां तेऽनुमितिमपि कार्यात्कथयति ॥ २३ ॥ फलैः पुष्पैः पत्रैर्विटपिनिवहैः शास्त्रबहुलैर्युतं रङ्गैरङ्गैर्भुवनरचितुः स्मारकमिदम् । सुनेत्राणां प्रीतिं जनयति परां काननमहो उपाकर्त्रे तुभ्यं वयमिह नमामोऽनवरतम् ॥ २४ ॥ य-

१ प्रकाशरूप परमेश्वर. २ ऐश्वर्यप्राप. ३ कर्माणि. ४ पृथक् कुरु. ५ कुटिल पापम् ।

स्मादुत्पत्तिगुप्ती क्षतिरपि जगतां यच्च शास्त्रैकयोनिः स-
र्वज्ञं मायया यत्सहजसुखसदद्वैतसंवित्स्वरूपम् । तद्ब्रह्म
स्वप्रकाशं श्रुतिशिखरगिरां सैव तात्पर्यभूमिः स्वात्माऽ
सौ यंविदित्वा जनिमृतिजलधिं निस्तरन्तीह सन्तः॥२५॥
भूःपादौ यस्य खंचोदरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे क-
र्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तव्यमब्धिः
। अंतस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः चित्रं
रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ २६ ॥

# धर्मवर्णनम्. २

धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः । पर-
लोकसहायार्थं सर्वभूतान्य पीडयन् ॥ १ ॥ नामुत्र हि
सहायार्थं पिता माता च तिष्ठतः । न पुत्रदारं न ज्ञा-
तिर्धर्मस्तिष्ठति केवलः ॥ २ ॥ एकः प्रजायते जन्तुरेक
एव प्रलीयते । एको नु भुङ्क्ते सुकृतमेक एव च दुष्कृ-
तम् ॥ ३ ॥ एकः पापानि कुरुते फलं भुङ्क्ते महा-
जनः । भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते

॥ ४ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ ५ ॥ तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः । धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ६ ॥ अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् । गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ७ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ८ ॥ अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यः संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ ९ ॥ अस्थिरं जीवितं लोकेह्यस्थिरे धनयौवने । अस्थिराः पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥ १० ॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यति ॥ ११ ॥ एक एव सुहृद्धर्मो निधनेप्यनुयाति यः । शरीरेण समं सर्वं नाशमन्यद्धि गच्छति ॥ १२ ॥ मुहूर्तमपि जीवेच्च नरः शुक्लेन कर्मणा । न कल्पमपि पापेन लोकद्वयविरोधिना ॥ १३ ॥ युवैव धर्मशीलः स्यादनित्यं खलु जीवितम् । को हि

जानाति कस्याद्य मृत्युकालो भविष्यति ॥ १४ ॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ १५ ॥ जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम् । मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः ॥ १६ ॥ धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् । सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ १७ ॥ अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः । अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ १८ ॥ याता यान्ति च यातारो लोकाः शोकाधिका भुवि । धर्मसंबन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ १९ ॥ धर्मे मतिर्भवतु वः सततोत्थितानां सह्येक एव परलोकगतस्य बन्धुः । अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥ २० ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ २१ ॥ वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा १

पुण्यानि पुरा कृतानि ॥ २२ ॥ आयुः क्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि । तच्चेद्गच्छति सर्वं मृषा ततः काऽधिका हानिः ॥ २३ ॥ सकलाऽपि कला कलावतां विकला पुण्यकलां विना खलु । सकले नयने वृथा यथा तनुभाजां हि कनीनिकां विना ॥ २४ ॥ मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता विप्रत्वे बहुविद्यताऽतिगुणता विद्यावतोऽर्थज्ञता । अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥ २५ ॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २६ ॥ सुखितस्य दुःखितस्य च संसारे धर्म एव तव कार्यः । सुखितस्य तदभिवृद्ध्यै दुःखभुजस्तदुपघाताय ॥ २७ ॥ आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः ॥ अनाचारस्त्वधर्मेति ह्येतच्छिष्टानुशासनम् ॥ २८ ॥ संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः । परोपकारः पुण्याय पापाय परपीडनम् ॥ २९ ॥ सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।

प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ३० ॥ गृहस्थः पालयेद्दारान्विद्यामभ्यासयेत्सुतान् । गोपयेत्स्व जनान्बन्धूनेष धर्मः सनातनः ॥ ३१ ॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ३२ ॥ व्यसने वाऽर्थकृच्छ्रे वा भये वा जीवितान्तगे । विमृशंश्च स्वया बुद्ध्या धृतिमान्नावसीदति ॥ ३३ ॥ दमः पवित्रं परमं मङ्गल्यं परमं दमः । दमेन सर्वमाप्नोति यत्किंचिन्मनसेच्छति ॥ ३४ ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । आचारेषु व्यवस्थानं शौचमित्यभिधीयते ॥ ३५ ॥ धर्मस्य तस्य लिङ्गानि दया क्षान्तिरहिंसनम् । तपो दानं च शीलं च सत्यं शौचं वितृष्णता ॥ ३६ ॥ सत्यादुत्पद्यते धर्मो दयादानाद्विवर्द्धते । क्षमया तिष्ठते धर्मः क्रोधाद्धर्मो विनश्यति ॥ ३७ ॥ अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ३८ ॥ ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा । नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत्

॥ ३९ ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ४० ॥ वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः । तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥ ४१ ॥ न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स साधुभिर्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ ४२ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ४३ ॥ बालो वा यदि वा वृद्धो युवा वा गृहमागतः । तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ॥ ४४ ॥ उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः । पूजनीयो यथा योग्यं सर्वस्याभ्यागतो गुरुः ॥ ४५ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ४६ ॥ राज्यं च संपदाभोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥ ४७ ॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरम्परा । नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमा-

दृशम् ॥ ४८ ॥ प्रियवचनवादि प्रियो भवति विमृशितकार्यकरोऽधिकं जयति । बहुमित्रकरः सुखं वसते यश्च धर्मरतः स गतिं लभते ॥ ४९ ॥ यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च । हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ५० ॥ धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः । तस्माद्धर्मो न हातव्यो मा नो धर्मोहतोऽवधीत् ॥ ५१ ॥

## क्षमाप्रशंसा. ३

क्षमातुल्यं तपो नास्ति संतोषान्न परं सुखम् । न च तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ १ ॥ बाह्ये वाऽभ्यन्तरे चैव दुःखे चोत्पातिके क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥ २ ॥ क्षमाबलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किं न सिद्ध्यति ॥ ३ ॥ क्षमाशस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वन्हिः स्वयमेवोपशाम्यति ॥ ४ ॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः ।

गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ ५ ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् । अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ६ ॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमयायुक्तमशक्तं मन्यते जनः ॥ ७ ॥ आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् । वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ८ ॥ हिंसाबलमसाधूनां राज्ञां दण्डविधिर्बलम् । शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥ ९ ॥ आक्रुश्यमानो नाक्रोशेन्मन्युमेव तितिक्षतु । आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १० ॥ क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि । क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ११ ॥ वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् । नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ १२ ॥ हिंस्यात्क्रोधादवध्यांस्तु वध्यान्संपूजयीत च । आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ १३ ॥ एतान्दोषान्प्रप-

१ क्षमापणम्. २ निन्दा.

श्यद्भिर्जितः क्रोधो मनीषिभिः । इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ १४ ॥ येषां मन्युर्मनुष्याणां क्षमयाऽभिहतः सदा । तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥१५॥ अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥१६॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते । द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ १७ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । क्रोधाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ १८ ॥ फलान्वितो धर्मयशोऽर्थनाशनः स चेदपार्थः स्वशरीरतापनः । न चेह नामुत्र हिताय यः सतां मनांसि कोपः समुपाश्रयेत्कथम्॥१९॥ धन्यास्ते पुरुषव्याघ्रा ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महत्पारं दीप्तमग्निमिवाम्भसा ॥ २० ॥ न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ २१ ॥ अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम् । न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ २२ ॥ पूर्वोपकारी

यस्ते स्यादपराधे गरीयसि । उपकारेण तत्तस्य क्षन्तव्य-
मपराधिनः ॥ २३ ॥ नाक्रोशीस्यान्नावमानी परस्य
मित्रद्रोही नोत नीचोपसेवी । न चाभिमानी न च
हीनवृत्तो रूक्षां वाचं रुषतीं वर्जयीत ॥ २४ ॥ मर्मा-
ण्यस्थीनि हृदयं तथाऽसून् रूक्षा वाचो निर्दहन्तीह
पुंसाम् । तस्माद्वाचमुषतीमुग्ररूपां धर्मारामो नित्यशो
वर्जयीत ॥ २५ ॥ परश्चेदेनमभिविध्येत बाणैर्भृशं सु-
तीक्ष्णैरनलार्कदीप्तैः । स विध्यमानोऽप्यतिदह्यमानो वि-
द्यात्कविःसुकृतं मे दधाति ॥ २६ ॥ क्षुधासमं नास्ति
शरीरपीडनं चिन्तासमं नास्ति शरीरशोषणम् । विद्या
समं नास्ति शरीरभूषणं क्षमासमं नास्ति शरीररक्षणम्
॥ २७ ॥ क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रु-
तम् । य एतदेवं जानाति स सर्वं क्षन्तुमर्हति ॥ २८ ॥
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च । क्षमा
तपः क्षमा शौचं क्षमयेदं धृतं जगत् ॥ २९ ॥ अतिय-
ज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति च । अतिब्रह्मविदां

---

२ पुष्णाति॰

लोकानति चापि तपस्विनाम् ॥ ३० ॥ क्षन्तव्यमेव सततं पुरुषेण विजानता । यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ३१ ॥ क्षमावतामयं लोकः परश्चैव क्षमावताम् । इह सन्मानमृच्छन्ति परत्र च शुभां गतिम् ॥ ३२ ॥

## सत्यप्रशंसा. ४

नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् । न हि तीव्रतरं किंचिदनृतादिह विद्यते ॥ १ ॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २ ॥ सत्ये कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः । सत्यमेव गरीयस्तु शिष्टाचारसमन्वितम् ॥ ३ ॥ सत्यं मृदु प्रियं वाक्यं धीरो हितकरं वदेत् । आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत् ॥ ४ ॥ सत्यमेव व्रतं यस्य दया दीनेषु सर्वदा । कामक्रोधौ वशे यस्य स साधुः कथ्यते बुधैः ॥ ५ ॥ सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते । तस्मात्सत्यं हि वक्त-

व्यं सर्ववर्णेषु साक्षिभिः ॥ ६ ॥ चत्वार एकतो वेदः
साङ्गोपाङ्गाः सविस्तराः । स्वधीता मनुजव्याघ्र सत्य-
मेकं किलैकतः ॥ ७ ॥ सत्यं स्वर्गस्य सोपानं पारावा
रस्य नौरिव । न पावनतमं किंचित्सत्यादध्यगमं क्व-
चित् ॥ ८ ॥ नासत्यवादिनः सख्यं न पुण्यं न यशो-
भुवि । दृश्यते नापि कल्याणं कालकूटमिवाश्नतः ॥९ ॥
मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात् । यो
ऽन्यायादन्यथा ब्रूते स नरः पापमाप्नुयात् ॥ १० ॥ योऽ
न्यथासन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं
पापं चौरेणात्मापहारिणा ॥ ११ ॥ वाच्यर्था नियताः
सर्वे वाङ्मूला वाग्विनिःसृताः । तां तु यः स्तेनयेद्वाचं
स सर्वस्तेयकृन्नरः १२ ॥ नग्नो मुण्डः कपालेन भि-
क्षार्थी क्षुत्पिपासितः । अन्धः शत्रुकुलं गच्छेद्यः सा-
क्ष्यमनृतं वदेत् ॥ १३ ॥आवाक्शिरास्तमस्यन्धे किल्वि-
षी नरकं व्रजेत् । यः प्रश्नं वितथं ब्रूयात्पृष्टः सन्धर्मनि
श्चये ॥१४ ॥न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते
ये न वदन्ति धर्मम् । धर्मो न वै यत्र च नास्ति सत्यं सत्यं

न तद्यच्छलेनानुविद्धम् ॥ १५॥ असत्यमप्रत्ययमूलकारणं कुवासनासद्म समृद्धिवारणम् । विपन्निदानं परवञ्चनोर्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥ १६ ॥ सत्यमेव जयते नानृतं सत्येन पंथा विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ १७ ॥ यशो यस्माद्भस्मीभवति वनवह्नेरिव वनं निदानं दुःखानां यदवनिरुहाणामिव जलम् । न यत्र स्याच्छायातप इव तपः संयमकथा कथंचित्तन्मिथ्या वचनमभिधत्ते न मतिमान् ॥ १८ ॥

## विद्याप्रशंसा. ९

विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् । कोकिलानां स्वरो रूपं स्त्रीणां रूपं पतिव्रतम् ॥ १ ॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ २ ॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ३ ॥ अपूर्वः कोऽपि कोशोऽयं विद्यते

तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति सं-
चयात् ॥ ४ ॥ सद्विद्या यदि का चिन्ता वराकोदर पू-
रणे । शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥ ५ ॥
विद्या ददाति विनयं विनयाद्याति पात्रताम् । पात्रत्वा-
द्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ६ ॥ विद्यया श-
स्यते लोके पूज्यते चोत्तमैः सदा । विद्याहीनो नरः
प्राज्ञसभायां नैव शोभते ॥ ७ ॥ गतेऽपि वयसी ग्राह्या
विद्या सर्वात्मना बुधैः । यद्यपि स्यान्न फलदा सुल-
भा साऽन्यजन्मनि ॥ ८ ॥ नक्षत्रभूषणं चन्द्रो नारीणां
भूषणंपतिः । पृथिवीभूषणं राजा विद्या सर्वस्य भूष-
णम् ॥ ९ ॥ यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रुषुरधिगच्छति ॥ १० ॥ यथा
यथा हि पुरुषः शास्त्रं समधिगच्छति । तथा तथा वि-
जानाति विज्ञानंचास्य रोचते ॥ ११ ॥ वित्तं बन्धुर्व-
यः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थाना-
नि गरीयो यद्यदुत्तरम् ॥ १२ ॥ धर्माधर्मौ न जानाति
लोकोऽयं विद्यया विना । तस्मात्सदैव धर्मात्माविद्याः

दानपरो भवेत् ॥ १३ ॥ विद्याधनं श्रेष्ठधनं तन्मूलमितरद्धनम् । दानेन वर्द्धते नित्यं न भाराय न नीयते ॥ १४ ॥ कामधेनुगुणा विद्याह्यकाले फलदायिनी ॥ प्रवासे मातृसदृशी विद्या गुप्तं धनं स्मृतम् ॥ १५ ॥ तपो विद्या च विप्रस्य परं श्रेयस्करं मतम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १६ ॥ ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविता । विद्या तपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ १७ ॥ रूपयौवनसम्पन्नाः विशालकुलसम्भवाः । विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ १८ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ १९ ॥ मातृ पितृकृताभ्यासो गुणितामेति बालकः । न गर्भच्युतिमात्रेण पुत्रो भवति पण्डितः ॥ २० ॥ माता शत्रुःपिता वैरी बालो येन न पाठितः । न शोभते सभामध्ये हंसमध्ये बको यथा ॥ २१ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना । न गुह्यगोपने शक्तं न च दंशनिवारणे ॥ २२ ॥ विद्या मित्रं प्रवासेषु

भार्या मित्रं गृहेषु च । व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ २३ ॥ सुखार्थी त्यजते विद्यां विद्यार्थी वा त्यजेत् सुखम् । सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥ २४ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नैव साधनम् ॥ २५ ॥ बालादपि गृहीतव्यं युक्तमुक्तं मनीषिभिः । रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥ २६ ॥ परं पलितकायेन कर्त्तव्यः श्रुतसङ्ग्रहः । न तत्र धनिनो यान्ति यत्र यान्ति बहुश्रुताः ॥ २७ ॥ किं कुलेन विशालेन विद्याहीनस्य देहिनः । विद्यावान् पूज्यते लोके नाविद्यः परिपूज्यते ॥ २८ ॥ पुरुषं साहसक्लेशाद्यर्जनायासकारिणम् । लक्ष्मीर्विमुञ्चति क्वापि विद्याऽभ्यस्ता न मुञ्चति ॥ २९ ॥ किं तस्य मानुषत्वेन बुद्धिर्यस्य न निर्मला । बुद्ध्याऽपि किं फलं तस्य येन विद्या न सञ्चिता ॥ ३० ॥ अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं वर्तनोऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः । एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो

वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः॥३१॥ वसुमतीपतिना नु सरस्वती बलवता रिपुणापि न नीयते । समविभागहरैर्न विभज्यते विविधबोधबुधैरपि सेव्यते ॥ ३२ ॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि । व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ ३३ ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चापि रमयत्यपनीय खेदम्। लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥ ३४ ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं विद्या राजसु पूज्यते नहि धनं विद्या विहीनः पशुः ॥ ३५ ॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा । सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु ॥ ३६ ॥ हर्तुर्याति न गोचरं किमपि शं पुष्णाति स-

वर्त्मना ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् । कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमेतद्धनं येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ ३७ ॥ केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः । वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ ३८ ॥ क्षान्तिश्चेद्वचनेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं सर्पैर्यदि दुर्जनः किमु धनैर्विद्याऽनवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥ ३९ ॥ यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपाश्रयति । तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते बुद्धिः ॥ ४० ॥ निरक्षरे वीक्ष्य महाधनत्वं विद्याऽनवद्या विदुषा न हेया । रत्नावतंसाः कुलटाः समीक्ष्य किमार्य नार्यः कुलटा भवन्ति ॥ ४१ ॥

## वर्णधर्माः ६

न विशेषोस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥ १ ॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ २ ॥ येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वत्र च शायी स्यात्तं देवा ब्राह्मणं विदुः ॥ ३ ॥ योऽहिरिव गणाद्भीतः सन्मानान्नरकादिव । कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥ ४ ॥ निराशिषमनारम्भमनमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ५ ॥ क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम । यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ६ ॥ यो वदेदिह सत्यानि गुरुं संतोषयेत् च । हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ७ ॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः । कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः ॥ ८ ॥ योऽध्यापयेदधीयीत यजेद्वा याजयीत वा । दद्याद्वाऽपि यथाशक्ति तं देवा ब्रा-

ह्मणं विदुः ॥ ९ ॥ ब्रह्मचारी वदान्यो यो ऽप्यधीयाद्विजपुङ्गवः । स्वाध्यायवानमत्तो वै तं देवा ब्राह्मणं विदुः ॥ १० ॥ धर्मं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् । इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ ११ ॥ स्वाध्यायेन जपैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ १२ ॥ अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ १३ ॥ शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ १४ ॥ कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः । त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ १५ ॥ क्षत्रजं सेवते कर्म वेदाध्ययनसंगतः । दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ १६ ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ १७ ॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ १८ ॥ गोभ्यो वृत्तिं समास्थाय

पीताः कृष्युपजीविनः । स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥ १९ ॥ वाणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः । वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः ॥ २० ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ २१ ॥ कृषिगोरक्षवाणिज्यं वैश्यकर्मस्वभावजम् । परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ २२ ॥ सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः । त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥ २३ ॥ हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः । कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥ २४ ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ २५ ॥ इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः। धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते ॥ २६ ॥ अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः । अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥ २७ ॥ तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् । स्वल्पकेनाप्यविद्वान्हि

पङ्के गौरिव सीदति ॥ २८ ॥ न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे । न वकव्रतिके विप्रे नावेदविदि धर्मवित् ॥ २९ ॥ त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितं धनम् । दातुर्भवत्यनर्थाय परत्रादातुरेवच ॥३०॥ यथा प्लवेनोपलेन निमज्जत्युदके तरन् । तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥ ३१ ॥ धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥ ३२ ॥ अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतचरो द्विजाः ॥ ३३ ॥ ये वकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः । ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥ ३४ ॥ पश्य लक्ष्मण पम्पायां वकः परमधार्मिकः । शनैः शनैः पदंधत्ते प्राणिनां वधशङ्कया ॥ ३५ ॥ वकः किं श्लाघ्यते राम येनाहं निष्कुलीकृता । सहवासी विजानाति चरितं सहवासिनः ॥ ३६ ॥ शृणु यक्षकुलं तात न स्वाध्यायो न च श्रुतम् । कारणं हि द्विजत्वेच वृत्तमेव न संशयः ॥ ३७ ॥ चतुर्वेदोपि

दुर्वृत्तः स शूद्रादतिरिच्यते । योऽग्निहोत्रपरो दान्तःस ब्राह्मण इति स्मृतः ॥ ३८ ॥ विश्वामित्रो वसिष्ठश्च मतङ्गो नारदादयः । तपोविशेषैः संप्राप्ता उत्तमत्वं न जातितः ॥ ३९ ॥ ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रं च धर्मज्ञं सद्वृत्तम भिपूजयेत् ॥ ४० ॥ श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् । स्वधर्मेनिधनं श्रेयः परधर्मो भयावहः ॥ ४१ ॥ न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न । न च शूद्रो न वै म्लेच्छो भेदिता गुणकर्मभिः ॥ ४२ ॥ ज्ञानकर्मोपासनाभिर्देवताराधने रतः । शान्तो दान्तो दयालुश्च ब्राह्मणश्चगुणैः स्मृतः ॥ ४३ ॥ लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी । दुष्टनिग्रहशीलोयः स वै क्षत्रिय उच्यते ॥ ४४ ॥ क्रयविक्रयकुशला ये नित्यं पण्यजीविनः । पशुरक्षाः कृषिकरास्ते वैश्याः कीर्तिता भुवि ॥ ४५ ॥ द्विजसेवार्चनरताः शूराः शान्ता जितेन्द्रियाः । सीरकाष्ठतृणवहास्ते नीचाः शूद्रसंज्ञिताः ॥ ४६ ॥ त्यक्तस्वधर्माचरणा निर्घृणाः पर-

पीडकाः । चण्डाश्च हिंसका नित्यं म्लेच्छास्तेह्यविवे-
किनः ॥ ४७ ॥ कर्मणोत्तमनीचत्वं कालतस्तु भवेद्गुणैः
विद्याकलाऽऽश्रयेणैव तन्नाम्ना जातिरुच्यते ॥ ४८ ॥
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् । क्षत्रिया-
ज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥ ४९ ॥ संमनाद्ब्रा-
ह्मणो नित्यमुद्विजेत विषादिव । अमृतस्येव चाकाङ्क्षे-
दवमानस्यसर्वदा ॥ ५० ॥ यथा काष्ठमयो हस्ती यथा
चर्ममयो मृगः । यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बि-
भ्रति ॥ ५१ ॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते
श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः
॥ ५२ ॥ एकोपि वेदविद्धर्मं यंव्यवस्येद्द्विजोत्तमः । स
विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥ ५३ ॥ आ-
हारनिद्राभयमैथुनं च सामान्यमेतत्पशुमानवानाम् ।
धर्मो नराणामधिको विशेषो धर्मेण हीनः पशुभीः स-
मानः ॥ ५४ ॥

## दानधर्माः ७

यद्दाति यदश्नाति तदेव धनिनो धनम् । अन्ये

मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ १ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥ २ ॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसम्भवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ३ ॥ ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु । इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ ४ ॥ अनुकूले विधौ देयं यतः पूरयिता हरिः । प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ ५ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् । स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ ६ ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ ७ ॥ उपार्जितानां वित्तानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ ८ ॥ दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते । पुंसां यदि हि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥ ९ ॥ आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १० ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ११ ॥ यो न ददाति न भुङ्क्तेसति विभवे नैव तस्य तद्द्रव्यम् । तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १२ ॥ दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः । पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १३ ॥ विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति । तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥ १४ ॥ यस्य दानविहीनस्य धनान्यायान्ति यान्ति किम् । आरण्यकुसुमानीव निरर्थास्तस्य संपदः ॥ १५ ॥ त्यागो गुणो गुणशतादधिको मतो मे विद्या विभूषयति तं यदि किं ब्रवीमि । शौर्यं हि नाम यदि तत्र नमोऽस्तु तस्मै तच्च त्रयं न च मदोऽस्ति विचित्रमेतत् ॥ १६ ॥ अगाधेनापि किं तेन तोयेन लवणाम्बुधेः । जानुमात्रं वरं वारि तृष्णाछेदकरं नृणाम् ॥ १७ ॥ द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः । प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १८ ॥ न्यायागतस्य द्रव्यस्य बो-

द्रव्यौ द्वावतिक्रमौ। अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ १९ ॥ द्वावम्भसि निवेष्टव्यौ गले बध्वा दृढां शिलाम्। धनवन्तमदातारं दरिद्रं चातपस्विनम्॥ २० ॥ मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा। ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः ॥ २१ ॥ अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतंच। पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ २२ ॥ गोदुग्धं वाटिकापुष्पं विद्या कूपोदकं धनम्। दानाद्विवर्द्धते नित्यमदानाच्च विनश्यति ॥ २३ ॥ अन्नाद्बलं च तेजश्च प्राणिनां वर्द्धते सदा। अन्नदानमतो हेतोः श्रेष्ठमाह प्रजापतिः ॥ २४ ॥ पानीयं परमं दानं दानानां मनुरब्रवीत्। तस्मात्कूपांश्च वापीश्च तडागानि च खानयेत् ॥ २५ ॥ न गोप्रदानं न महीप्रदानं न चान्नदानं हि तथा प्रधानम्। यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम् ॥ २६ ॥ जलाशयाश्च वृक्षाश्च विश्रामगृहमध्वनि। सेतुः प्रतिष्ठितो येन तेन सर्वं वशीकृतम्

॥ २७ ॥ वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलदश्च प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ २८ ॥ भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूप्यमुत्तमम् ॥ २९ ॥ वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः । अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥ ३० ॥ यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम् ॥ ३१ ॥ सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते । वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥ ३२ ॥ अन्नदानं परं दानं विद्यादानमतःपरम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवं तु विद्यया ॥ ३३ ॥ देयं भेषजमार्तस्य परिश्रान्तस्य चासनम् । तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ३४ ॥ स्थितो मृत्युमुखे चाहं क्षणमायुर्ममास्ति न । इति मत्वा दानधर्मौ यथेष्टौ तु समाचरेत् ॥ ३५ ॥ येन केन प्रकारेण यस्य कस्यापि देहिनः । संतोषं जनयेत् प्राज्ञस्तदेवेश्वरपूजनम् ॥ ३६ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्ष-

मान्वितं शौर्यम् । वित्तं दानसमेतं दुर्लभमेतच्चतुर्भद्रम्
॥ ३७ ॥ अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौ-
वनं आयुष्यं जलविन्दुलोलचपलं फेनोपमं जीवनम् ।
दानं यो न करोति निश्चलमतिर्भोगं न भुङ्क्ते च यः
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥ ३८ ॥
सार्थः प्रसवतो मित्रं भार्या मित्रं गृहे सतः । आतुर-
स्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ३९ ॥ विद्य-
माने धने लोभाद्दानभोगविवर्जितः । पश्चान्नास्तीति यो
ब्रूयात्सोऽक्षयं नरकं व्रजेत् ॥ ४० ॥ पात्रे दानं स्वल्प-
मपि काले दत्तं युधिष्ठिर । मनसा हि विशुद्धेन प्रेत्या-
नन्तफलं स्मृतम् ॥ ४१ ॥ विप्रेभ्यः साधु दानं रिपु-
जनसुहृदांचोपकारान्करुत्वं सौजन्यं बन्धुवर्गे निजहि-
तमुचितं स्वामिकार्यं यथार्थम् । श्रोत्रे ते तथ्यमेतत्क-
थयति सततं लेखनी भाग्यशालिन्नोचेन्नष्टेऽधिकारे मम
मुखसदृशं तावकास्यं भवेद्धि ॥ ४२ ॥ न सीदन्नपि
धर्मेण मनोऽधर्मे निवेशयेत् । अधार्मिकाणां पापाना-
माशु पश्यन्विपर्ययम् ॥ ४३ ॥ अधार्मिको नरो यो

हि यस्य चाप्यनृतं धनम् । हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ॥ ४४ ॥ नाधर्मश्चरितो लोके सद्यः फलति गौरिव । शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥ ४५ ॥ यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु । न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥ ४६ ॥ अधर्मेणैधते तावत्ततो भद्राणि पश्यति । ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ४७ ॥ दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् । अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ४८ ॥ पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् । यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ४९ ॥ न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः । नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य[1] त्वनित्यः ॥ ५० ॥

---

## स्त्रीधर्माः ८

भर्ता हि परमं नार्या भूषणं भूषणैर्विना । एषा वि-

१ जीवत्वस्य हेतुरविद्या. ।

रहिता तेन शोभनाऽपि न शोभते ॥ १ ॥ न सा स्त्री-
त्यभिमन्तव्या यस्यां भर्ता न तुष्यति । तुष्टे भर्तरि
नारीणां तुष्टः स्यात्परमेश्वरः ॥ २ ॥ न कामेषु न भो-
गेषु नैश्वर्ये न सुखे तथा । स्पृहा यस्या यथा पत्यौ
सा नारी धर्मभागिनी ॥ ३ ॥ भर्ता देवो गुरुर्भर्ता ध-
र्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं भ-
जेत्सती ॥ ४ ॥ धर्मार्थकाममोक्षेषु भार्या पुंसः सहा-
यिनी । विदेशगमने चास्य सैव विश्वासकारिणी ॥ ५ ॥
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च । नास्ति
भार्यासमं किंचिन्नरस्यार्तस्य भेषजम् ॥ ६ ॥ नास्ति
भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः । नास्ति भा-
र्यासमो लोके सहायो धर्मसंग्रहे ॥ ७ ॥ अर्द्धं भार्या
मनुष्यस्य भार्या श्रेष्ठतमः सखा । असहायस्य लोकेऽ-
स्मिन् लोकयात्रासहायिनी ॥ ८ ॥ कान्तारेष्वपि वि-
श्रामो जनस्य गृहिणी मता । यः सदारः स विश्वास्य-
स्तस्माद्दाराः परा गतिः ॥ ९ ॥ अनुकूलां विमलाङ्गीं
कुलजां कुशलां सुशीलसंपन्नाम् । एतादृशीं सुभार्यां

पुरुषः पुण्योदयाल्लभते ॥ १० ॥ नास्ति यज्ञं स्त्रियः किंचिन्न व्रतं नोपवासकम् । या हि भर्तुश्च शुश्रूषा तया स्वर्गं जयत्यसौ ॥ ११ ॥ शुचि भूमिगतं तोयं शुचिर्नारी पतिव्रता । शुचिः क्षेमकरो राजा संतोषी ब्राह्मणः शुचिः ॥ १२ ॥ पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट् ॥ १३ ॥ मण्डनं वर्जयेन्नित्यं तथा प्रोषितभर्तृका । धारयेन्मङ्गलार्थानि किंचिदाभरणानि च । देवताराधनपरा तिष्ठेद्भर्तृहिते रता ॥ १४ ॥ नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् । विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ १५ ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य प्रदातारं भर्तारं का न पूजयेत् ॥ १६ ॥ क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ १७ ॥ सुस्वभावा सुवचना सुव्रता सुखदर्शना । अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ १८ ॥ पुरुषाण्यपि चोक्ता या दृष्टा दुष्टेन चक्षुषा । सुप्रसन्न-

सुखी भर्तुर्या नारी सा पतिव्रता ॥ १९ ॥ शुश्रूषां परिचर्यां च करोत्यविमनाः सदा । सुप्रतीता विनीता च सा नारी धर्मभागिनी ॥ २० ॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः । पत्या समा गतिर्नास्ति दैवतं वा यथापतिः ॥ २१ ॥ श्वश्रूश्वशुरयोः पादौ जोषन्ती सुगुणान्विता । मातापितृपरा नित्यं या नारी सा तपोधना ॥ २२ ॥ नेक्षेत्पतिं क्रूरदृष्ट्या श्रावयेन्नैव दुर्वचः । नाप्रियं मनसा वाऽपि चरेत्पत्युः पतिव्रता ॥२३॥ कार्येषु मन्त्री करणेषु दासी भोज्येषु माता शयनेषु रम्भा । धर्मानुकूला क्षमया धरित्री षाड्गुण्यमेतद्धि पतिव्रतानाम् ॥ २४ ॥ न दानैः शुध्यते नारी नोपवासशतैरपि । न तीर्थसेवया तद्वद्भर्तुः पादोदकैर्यथा ॥ २५ ॥ नगरस्थो वनस्थो वा पापो वा यदि वा शुचिः । यासां स्त्रीणां प्रियो भर्ता तासां लोके महोदयः ॥२६॥ पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः । स्त्रियः श्रियो गृहस्योक्ता स्तस्माद्रक्ष्या विशेषतः ॥ २७ ॥ पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ॥ पूज्या भूष-

यितव्याश्च बहुकल्याणमीप्सुभिः ॥ २८ ॥ शोचन्ति
जामयो यत्र विनश्यत्याशु तत्कुलम् । न शोचन्ति तु
यत्रैता वर्द्धते तद्धि सर्वदा ॥ २९ ॥ तस्मादेताः सदा
पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्का-
रेषुत्सवेषु च ॥ ३० ॥ स्त्रियां तु रोचमानायां सर्वं त-
द्रोचते कुलम् । तस्यां त्वरोचमानायां सर्वमेव न रो-
चते ॥ ३१ ॥ शाश्वतोऽयं धर्मपथः सद्भिराचरितः स-
दा । यद्भार्याः परिरक्षन्ति भर्तारो निर्बला अपि ॥३२॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे ध-
र्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥ ३३ ॥ यादृशं
भजते हि स्त्री सुतं सूते तथाविधम् । तस्मात्प्रजावि-
शुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥ ३४ ॥ अन्योन्यस्याव्य
भिचारो भवेदामरणान्तिकः । एष धर्मः समासेन ज्ञेयः
स्त्रीपुंसयोः परः ॥ ३५ ॥ तथा नित्यं यतेयातां स्त्री-
पुंसौ तु कृतक्रियौ । यथा नाभिचरेतां तौ वियुक्तावि-
तरेतरम् ॥ ३६ ॥ प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च
मानवः । तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहो-

दितः ॥ ३७ ॥ संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च । यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ॥ ३८ ॥ उत्सवे लोकयात्रायां तीर्थेष्वन्यनिकेतने । न पत्नीं प्रेषयेत्प्राज्ञः पुत्रामात्यविवर्जिताम् ॥ ३९ ॥ सम्यग्धर्मार्थकामेषु दम्पतीभ्यामहर्निशम् । एकचित्ततया भाव्यं समानव्रतवृत्तितः ॥ ४० ॥ पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा ॥ ४१ ॥ साऽहं तस्मिन् कुले जाता भर्तर्यसति मद्विधे । विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ ४२ ॥

---

## जीवितसाफल्यम्. ९

स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ १ ॥ प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः । किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २ ॥ सद्भिरेव सहासीत सद्भिः

कुर्वीत संगतिम् । सद्भिर्विवादं मैत्रीं च नासद्भिः किंचि-
दाचरेत् ॥ ३ ॥ परोपकारः कर्त्तव्यः प्राणैरपि धनैरपि ।
परोपकारजं पुण्यं न स्यात् क्रतुशतैरपि ॥ ४॥ धनानि
जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । तन्निमित्तो वरं त्या
गो विनाशे नियते सति ॥ ५ ॥ रविश्चन्द्रो घना वृक्षाः
नदी गावश्च सज्जनाः । एते परोपकाराय युगे दैवेन नि-
र्मिताः ॥ ६ ॥ तृणं चाहं वरं मन्ये नरादनुपकारिणः ।
घासो भूत्वा पशून्पाति भीरून्पाति रणाङ्गणे ॥ ७ ॥
आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं
परोपकारार्थं यो जीवति स जीवति ॥ ८ ॥ परोपकार-
शून्यस्य धिङ्मनुष्यस्यजीवितम् । धन्यास्ते पशवो येषां
चर्माप्युपकरिष्यति ॥ ९ ॥ एतद्धि जन्मसाफल्यं यद-
नायत्तवृत्तिता ॥ येपराधीनतां यातास्ते वै जीवन्ति के
मृताः ॥ १० ॥ दानं वित्तादृतं वाचः कीर्तिधर्मौ तथा-
युषः । परोपकरणं कायादसारात्सारमाहरेत् ॥११॥ वाणी
रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती
यस्य सफलं तस्य जीवितम् ॥ १२ ॥ यस्मिन् जीवति

जीवन्ति बहवः स तु जीवति । काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ १३ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । परिवर्तिनि संसारे मृतः कोवा न जायते ॥ १४ ॥ परोपकरणं येषां जागर्ति हृदये सताम् । विपदश्चैव नश्यन्ति संपदः स्युः पदे पदे ॥ १५ ॥ जीवितान्मरणं श्रेष्ठं परोपकृतिवर्जितात् । मरणं जीवितं मन्ये यत्परोपकृतिक्षमम् ॥ १६ ॥ यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः ॥ सफलं जीवितं तस्य नात्मार्थे को हि जीवति ॥ १७ ॥ यस्य मित्राणि मित्राणि शत्रवः शत्रव स्तथा । अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ १८ ॥ दानोप भोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि नजीवति ॥१९॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदाव बोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम्॥२०॥परोपकाराय फलन्ति वृक्षाःपरोपकाराय वहन्ति नद्यः । परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥ २१ ॥ जीवितं तदपि जीवितमध्ये

गण्यते सुकृतिभिः किमु पुंसाम् । ज्ञानविक्रमकलाकुल-
लज्जात्यागभोगरहितं विफलं यत् ॥ २२ ॥ पिबन्ति
नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः
। नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां
विभूतयः ॥ २३ ॥ रत्नाकरः किं कुरुते हि रत्नैर्विन्ध्याच
लः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं
परोपकाराय सतां विभूतयः ॥२४ ॥ भवन्ति नम्रास्त-
रवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः । अनुद्धता
सत्पुरुषाः समृद्धिभिः स्वभावएवैषपरोपकारिणाम्॥२५॥
श्रोत्रं श्रुतेनैव न कुण्डलेनदानेन पाणिर्नतु कङ्कणेन ।
विभाति कायः खलु सज्जनानां परोपकारेण न चन्दनेन
॥ २६ ॥ पद्माकरं दिनकरो विकचं करोति चन्द्रो विका-
सयति कैरवचक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलं
ददाति सन्तः स्वयं परहितेषु कृताभियोगाः ॥ २७ ॥
यो नात्मजे नच गुरौ न च भृत्यवर्गे दीने दयां न कुरुते
न च बन्धुवर्गे । किंतस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ २८ ॥

## ऐक्यप्रसंशा. १०

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ १ ॥ बहूनां चैव सत्वानां समवायो रिपुंजयः । वर्षधाराधरो मेघस्तृणैरपि निवार्यते ॥ २ ॥ संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि । तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ ३ ॥ पृथिव्यप्तेजसां सङ्घो दृष्टः कार्यस्य साधकः । भिन्नास्तदणवः सर्वे न शक्तास्तस्यसिद्धये ॥ ४ ॥ एकस्मिन्पक्षिणी काके यदा विज्ञायते विपत् । ते काक मिलिताः सन्तो यतन्ते तन्निवृत्तये ॥ ५ ॥ वानराणां तथा दृष्टाह्यन्योन्यस्य सहायता । मनुष्यैरपि कर्तव्या न विरोधः कदाचन ॥ ६ ॥ महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः । प्रसह्य एव वातेन शक्यो धर्षयितुं क्षणात् ॥ ७ ॥ एवं मनुष्यमप्येकं शौर्येणापि समन्वितम् । शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम् ॥ ८ ॥ अथ ये संहता वृक्षाः सङ्घशः सुप्रतिष्ठिताः । तेहि शीघ्रतमान्वातान् सहन्तेऽन्योन्यसंश्रयात् ॥ ९ ॥

अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च । ज्ञातयः संप्रवर्द्धन्ते सरसीवोत्पलान्युत ॥ १० ॥ ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः । ये पापा इति विख्याताः संवासे परिगर्हिताः ॥ ११ ॥ जायापत्योश्च पित्रोश्च भ्रात्रोश्च स्वामिभृत्ययोः । भगिन्योर्मित्रयोर्भेदं न कुर्याद्गुरुशिष्ययोः ॥ १२ ॥ यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् । स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते ॥ १३ ॥ ज्ञातयोवर्द्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् । कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ॥ ॥ १४ ॥ श्रेयसा योक्ष्यसे राजन् कुर्वाणो ज्ञातिसत्क्रियाम् । विगुणा अपि संरक्ष्या ज्ञातयो भरतर्षभ ॥ १५ ॥ संभोजनं संकथनं संप्रीतिश्च परस्परम् । ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ १६ ॥ ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च । सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ १७ ॥ यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते । कुठारे दण्डनिर्मुक्ते भिद्यन्ते तरवः कथम् ॥ १८ ॥ कुठारमालिकां दृष्ट्वा कम्पिताः सकला

द्रुमाः । वृद्धस्तरुरुवाचेदं स्वजातिर्नैव दृश्यते ॥ १९ ॥ ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना । सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ २० ॥ न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः । न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ॥ २१ ॥

## गुरुमहिमा. ११

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः ॥ १ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वहितान्गुरून् । न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ २ ॥ अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ३ ॥ प्रष्टव्या गुरवो नित्यं ज्ञातमर्थमपि स्वयम् । स तैर्निश्चयमानीतो ददाति परमं सुखम् ॥ ४ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ५ ॥ बुद्ध्या

भयं प्रणुदति तपसा विन्दते महत् । गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ६ ॥ यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् । तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वाऽपि नो लभेत् ॥ ७ ॥ योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत् । न च जात्याऽनधीतो हि गुरुर्भवितुमर्हति ॥ ॥ ८ ॥ अज्ञो भवति वै बालः पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥ ९ ॥ य आवृणोत्यवितथं ब्राह्मणः श्रवणावुभौ । स माता स पिता ज्ञेयस्तं न द्रुह्येत कदाचन ॥ १० ॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् । न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ ११ ॥ उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता । ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ १२ ॥ न हायनैर्न पलितैर्न वित्तेन न बंधुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ १३ ॥ न तेन वृद्धो भवति येनास्य दलितं शिरः । यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ १४ ॥ गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्त्तते । कर्णौ तत्र पिधा-

तव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १५ ॥ परीवादात्खरो भवति श्वा वै भवति निन्दकः । परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ १६ ॥ यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः । आदौ ज्ञानप्रसिद्ध्यर्थं कृतघ्नत्वापनुत्तये ॥ १७ ॥ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥१८॥ पिता ह्येनं जनयति पुरुषं पुरुषर्षभ । प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ १९ ॥ विद्याभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः । अहिंसा गुरुसेवा च परंश्रेयस्करं मतम् ॥ २० ॥ परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ २१ ॥

---

## गुणप्रशंसा. १२

गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः ॥ १ ॥ यदि

सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहिकस्तूरिकामोदः शपथेन निवार्यते ॥ २ ॥ गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ ३ ॥ शरीरस्य गुणानां च दूरमत्यंतमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ४ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ ५ ॥ गुणेषुक्रियतां यत्नः किमाटोपैः प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ६ ॥ गुणैर्गौरवमायाति नोच्चैरासनमास्थितः । प्रासादशिखरस्थोपि काकः किं गरुडायते॥७॥ गुणैः सर्वज्ञकल्पोऽपि सीदत्येकोनिराश्रयः । अनर्घ्यमपि माणिक्यं हेमाश्रयमुपेक्षते ॥ ८ ॥ गुणेनस्पृहणीयः स्यान्न रूपेण यतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ ९ ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । स गुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ १० ॥ सर्वत्र गुणवानेव चकास्ति प्रथितो नरः । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते॥११॥

न पुत्रत्वेन पूज्यन्ते गुणैराप्यते पदम् । स्वैर्व्यापारमादत्ते प्रदीपो न पुनः शशी ॥ १२ ॥ गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः । अलिरेति वनात्पद्मं न दर्दुरस्त्वेकवासोऽपि ॥ १३ ॥ गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः । सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ १४ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति निर्बलः । मधोर्गुणं वेत्ति पिको न वायसः करी च सिंहस्य बलं न मूषकः ॥ १५ ॥

## वाङ्माधुर्यप्रशंसा. १२

तास्तु वाचः सभायोग्या या चित्ताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १ ॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नष्टः । किं तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥ २ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् । इत्यादि गुणरत्नानां संग्रही नावसीदति ॥

सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहिकस्तूरिकामोदः शपथेन निवार्यते ॥ २ ॥ गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ ३ ॥ शरीरस्य गुणानां च दूरमत्यंतमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ४ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ ५ ॥ गुणेषुक्रियतां यत्नः किमाटोपैः प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ६ ॥ गुणैर्गौरवमायाति नोच्चैरासनमास्थितः । प्रासादशिखरस्थोपि काकः किं गरुडायते॥७॥ गुणैः सर्वज्ञकल्पोऽपि सीदत्येकोनिराश्रयः । अनर्घ्यमपि माणिक्यं हेमाश्रयमुपेक्षते ॥ ८ ॥ गुणेनस्पृहणीयः स्यान्न रूपेण यतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ ९ ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । स गुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ १० ॥ सर्वत्र गुणवानेव चकास्ति प्रथितो नरः । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते॥११॥

न पुत्रत्वेन पूज्यन्ते गुणैराप्यते पदम् । रवेर्व्यापारमादत्ते प्रदीपो न पुनः शशी ॥ १२ ॥ गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः । अलिरेति वनात्पद्मं न दर्दुरस्त्वेकवासोऽपि ॥ १३ ॥ गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः । सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ १४ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणावली बलं वेत्ति न वेत्ति निर्बलः । मधोर्गुणं वेत्ति पिकोन वायसः करी च सिंहस्य बलं न मूपकः ॥ १५ ॥

## वाङ्माधुर्यप्रशंसा. १३

तास्तु वाचः सभायोग्या या चिताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १ ॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याद्यो[illegible] नष्टः । किं तद्द्रव्यं कोकिलेनोपनीतं को वा [illegible] भस्यापराधः ॥ २ ॥ धर्मो यशो नयो [illegible] सुभाषितम् । इत्यादि गुणरत्नानां [illegible]

॥ ३ ॥ न हीदृशं संवननं त्रिषु लोकेषु किंचन । दया मैत्रीच भूतेषु दानं च मधुरा च वाक् ॥ ४ ॥ भार्या पुत्रोऽप्युद्विजेत कटुवाक्यात्प्रदण्डतः । पशवोऽपि वशं यान्ति दानैश्च मृदुभाषणैः ॥ ५ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ६ ॥ लक्ष्मीर्वसति जिव्हाऽग्रे जिह्वाऽग्रे मित्रबान्धवाः । जिव्हाऽग्रे बन्धनं प्राप्तं जिव्हाऽग्रे मरणं ध्रुवम् ॥ ७ ॥ नारुन्तुदः स्यादार्त्तोऽपि नपरद्रोहकर्मभिः । यथाऽस्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥८॥ को हि भारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ ९ ॥ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा । परापवादसस्येभ्यो गां चरन्तीं निवारय ॥ १० ॥ हृदि विद्ध इवात्यर्थं यया संतप्यते जनः । पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥ ११ ॥ प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा । शिखीव केकां मधुरां वाचं ब्रूते जनप्रियः ॥ १२ ॥ मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः ।

हरन्ति न तथा वाचो यथा वाचो विपश्चिताम् ॥ १३ ॥ कामान्दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति । तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥ १४ ॥ तथ्यं पथ्यं सहेतु प्रियमितमृदुलं सारवद्दैन्यहीनं साभिप्रायं दुरापं सविनयमशठं चित्रमल्याक्षरं च । बह्वर्थं कोपशून्यं स्मितयुतघनदाक्षिण्यसंदेहहीनं वाक्यं ब्रूयाद्रसज्ञः परिषदि समये सप्रमे याप्रमेयम्॥१५॥खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वाऽन्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति।अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशी कर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥१६॥

## मित्रप्रशंसा. १४

मित्रवान्साधयत्यर्थान् दुःसाध्यानपि वै यतः । तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ १ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः ॥ न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ २ ॥ कराविव श-

रीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥ ३ ॥ यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो नास्तीह पुण्यवान् ॥ ४ ॥ शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः । दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ५ ॥ स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ ६ ॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ ७ ॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्यच । नरस्य शोकदग्धस्य सुहृद्दर्शन मौषधम् ॥ ८ ॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ ९ ॥ परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं विषकुम्भं पयो मुखम् ॥ १० ॥ अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च । तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ॥ ११ ॥ धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा । मित्रा-

णां चानभिद्रोहः संसेताः समिधः श्रियः ॥ १२ ॥ माता मित्रं पिता चेति स्वभावात्रितयं हितम् । कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ १३ ॥ सुहृदां हितकामानां यः शृणोति न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥ १४ ॥ दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् ॥ न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ १५ ॥ मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्र दिवाकरौ ॥ १६ ॥ रहस्यभेदो याञ्चा च नैष्ठुर्य्यंचलचित्तता । क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ १७ ॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षकं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ १८ ॥ इच्छेच्चेद्विपुलां मैत्रीं त्रीणि तत्र न कारयेत् । वाग्वादमर्थसंबन्धं तत्पत्नीपरिभाषणम् ॥ १९ ॥ शीलं शौर्यमनालस्यं पाण्डित्यं मित्रसंग्रहः । अचोरहरणीयानि पञ्चैतान्यक्षयो निधिः ॥ २० ॥ सकृद्दुष्टं च मित्रं यः पुनः सन्धातुमिच्छति । स मृत्युमुपगृह्णाति

गर्भमश्वतरी यथा ॥ २१ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । कारणेन हि जायन्ते मित्राणि रिपवस्तथा ॥ २२ ॥ कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् । जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥ २३ ॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति । आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ २४ ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ २५ ॥ मुखं प्रसन्नं विमला च दृष्टिः कथाऽनुरागो मधुरा च वाणी । स्नेहोऽधिकं संभ्रमदर्शनं च सदाऽनुरक्तस्य जनस्य लक्ष्म ॥ २६ ॥ अदृष्टिदानं कृतपूर्वनाशनममाननं दुश्चरितानुकीर्तनम् । कथाप्रसङ्गे न च नाम विस्मृतिर्विरक्तभावस्य जनस्य लक्षणम् ॥ २७ ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमि-

च्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ २८ ॥ आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ २९ ॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ ३० ॥

## उद्यमप्रशंसा· १५

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ १ ॥ यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च । अवश्यं तदवाप्नोति न चेच्छान्तो निवर्तते ॥ २ ॥ केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः । केचिज्ज्ञानावलेपेन केचिन्नष्टैस्तु नाशिताः ॥ ३ ॥ चिन्तनीया हि विपदामादावेव प्रतिक्रियाः । न कूपखननं युक्तं प्रदीप्ते वन्हिना गृहे ॥ ४ ॥ वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह । कृशताऽभिमता-

देहे पीनता न तु शोफतः ॥ ५ ॥ न कश्चिदपि जानाति किं कस्य श्वो भविष्यति । अतः श्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥ ६ ॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ ७ ॥ उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते तत्र देवः सहायवान् ॥ ८ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ९ ॥ न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ १० ॥ विहाय पौरुषं यो हि दैवमेवावलम्बते । प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसः ॥ ११ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना दैवं न सिध्यति॥१२॥ प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम् । तदोपदेशा व्यर्थाः स्युः कार्याकार्यप्रबोधकाः ॥ १३ ॥ धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् । अशक्ताः पौरुषं कर्तुं क्लीबा दैवमुपासते ॥ १४ ॥ भोक्ता तृप्यति ना-

भोक्ता गन्ता गच्छति नागतिः । वक्ता वक्ति न चाव-
क्ता पौरुषं सफलं नृणाम् ॥ १५ ॥ शुभेन पुरुषार्थेन
शुभमासाद्यते फलम् । अशुभेनाशुभं राम यथेच्छसि
तथा कुरु ॥ १६ ॥ दैवमेवेह चेत्कर्तृ पुंसः किमिव
चेष्टया । स्नानदानासनोच्चारान्दैवमेव करिष्यति ॥१७॥
कालविद्भिर्विनिर्णीता यस्यास्ति चिरजीविता । स चे-
ज्जीवति संछिन्नशिरास्तद्दैवमुत्तमम् ॥ १८ ॥ कालवि-
द्भिर्विनिर्णीतं पाण्डित्यं यस्य राघव । अनध्यापित ए-
वासौ तज्ज्ञश्चेद्दैवमुत्तमम् ॥ १९ ॥ निपानमिव मण्डू-
काः सरः पूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति वि-
वशाः सर्वसंपदः ॥ २० ॥ कामपि श्रियमासाद्य यस्त
द्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटु-
म्बवत् ॥ २१ ॥ आलस्यं हि मनुष्याणां शरीरस्थो
महान् रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वा यं नाव-
सीदति ॥ २२ ॥ आरभन्तेऽल्पमेवाज्ञाः कार्यं व्यग्रा
भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निरा-
कुलाः ॥ २३ ॥ अलसस्य कुतो विद्या ह्यविद्यस्य कु-

तो धनम् । अधनस्य कुतो मित्रममित्रस्य कुतः सुख-
म् ॥ २४ ॥ अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया ।
रक्षितं वर्धयेत्सम्यग्वृद्धं पात्रेषु निक्षिपेत् ॥ २५ ॥ दो-
षभीतेरनारम्भस्तत्कापुरुषलक्षणम् । कैरजीर्णभयाद्भ्रात-
र्भोजनं परिहीयते ॥ २६ ॥ यस्य यस्य हि यो भाव-
स्तेन तेन हितं नरम् । अनुप्रविश्य मेधावी क्षिप्रमा-
त्मवशं नयेत् ॥ २७ ॥ यो न संचरते देशान्यो न से-
वेत पण्डितान् । तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवा-
म्भसि ॥ २८ ॥ यस्तु संचरते देशान्यस्तु सेवेत पण्डि-
तान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि
॥ २९ ॥ व्यापारान्तरमुत्सृज्य वीक्ष्यमाणो वधूमुख-
म् । यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः॥ ३० ॥
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरया-
त्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ३१ ॥ उद्धरेदात्म-
नाऽऽत्मानं नात्मानमवसादयेत् । आत्मैव ह्यात्मनो बन्धु-
रात्मैव रिपुरात्मनः ॥ ३२ ॥ परान्नं परवस्त्रं च परश-
य्या परस्त्रियः । परवेश्मनिवासश्च शक्रस्यापि श्रियं

हरेत् ॥ ३३ ॥ उच्छास्त्रितं शास्त्रितं च पौरुषं द्विविधं स्मृतम् । उच्छास्त्रितमनर्थाय परमार्थाय शास्त्रितम् ॥ ३४ ॥ वीरः सुधीः सुविद्यश्च पुरुषः पुरुषार्थवान् । तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः ॥ ३५ ॥ अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च । महान्भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ॥ ३६ ॥ यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् । अवसीदेत्स दुर्बुद्धिरामो घट इवोदके ॥ ३७ ॥ सिंहाः सत्पुरुषाश्चैव निजदर्पोपजीविनः । पराश्रयेण जीवन्ति कातराः शिशवः स्त्रियः ॥ ३८ ॥ विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया । यस्यैते षड्गुणास्तस्य न साध्यमतिवर्तते ॥ ३९ ॥ वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु । परीक्ष्य कारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ४० ॥ यत्रोत्साहसमारम्भो यत्रालस्य विहीनता । नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ ४१ ॥ निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः । सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति

॥ ४२ ॥ विषमं समतां याति दूरमायाति चान्तिकम् । सलिलं स्थलतामेति कार्यकाले महात्मनाम् ॥ ४३ ॥ नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः । आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥ ४४ ॥ आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः । कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ ४५ ॥ न स्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन । न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥ ४६ ॥ आबाल्यादलमभ्यस्तैः शास्त्रसत्सङ्गमादिभिः । गुणैः पुरुषयत्नेन सोऽर्थः संप्राप्यते हितः ॥४७॥ शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥४८॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ ४९ ॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं विहाय कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ५० ॥ आरभ्यते न खलु विघ्न भयेन नीचैः प्रारभ्य विघ्नवि-

हता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ ५१ ॥ आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् । संतोषो भीरुत्वं षड्व्याघाता महत्त्वस्य ॥ ५२ ॥ अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् । प्रमदा पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥ ५३ ॥ उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् । शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ ५४ ॥ अर्थः सुखं कीर्तिरपीह माभूदनर्थ एवास्तु तथापि धीराः । निजप्रतिज्ञामधिरुह्यमाना महोद्यमाः कर्म समारभन्ते ॥ ५५ ॥ कुचैलिनं दन्तमलावधारिणं बह्वाशिनं नित्यकठोरभाषिणम् । सूर्योदयेचास्तमये च शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् ॥ ५६ ॥ प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः । दुःखं च काले सहते महात्मा धुरन्धरस्तस्य विपद्विनश्येव् ॥ ५७ ॥ सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च । पर्यायशः

सर्वमेते स्पृशन्ति तस्माद्धीरो न च हृष्येन्न शोचेत्
॥ ५८ त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचि-
द्गतिमाप्नुयात्सः । यथा समुद्रेपि च पोतभङ्गे सांयात्रिको
वाञ्छति तर्तुमेव ॥ ५९ ॥ विद्यां वित्तं शिल्पं तावन्ना-
प्नोति मानवः सम्यक् । यावद्व्रजति न भूमौ देशाद्देशा-
न्तरं हृष्टः ॥ ६० ॥ देशान्तरेषु बहुविधभाषावेषादि
येन न ज्ञातम् । भ्रमता धरणीपीठे तस्य फलं जन्मनो
व्यर्थम् ॥ ६१ ॥ यस्यास्ति सर्वत्र गतिः स कस्मात्स्व-
देशरागेण हि याति नाशम् । तातस्य कूपोऽयमिति
ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ॥ ६२ ॥ गन्त-
व्या राजसभा द्रष्टव्या राजवल्लभाः पुरुषाः । यद्यपि न
भवन्त्यर्था भवन्त्यनर्थप्रतीकारः ॥ ६३ ॥

## उदारप्रशंसा. १६

कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः । ददौ
दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ १ ॥ युध्यन्ते
पक्षिपशवः पठन्ति शुकसारिकाः । दातुं शक्नोति यो

वित्तं स शूरः स च पण्डितः ॥ २ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं प्राणमिवात्मनः । तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाऽप्यथवा श्रुत्वा नरः पुण्यमवाप्नुयात् ॥ ४ ॥ अयं निजः परो वेत्ति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ५ ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी धनं हित्वा हि गच्छति ॥ ६ ॥ शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ ७ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ ८ ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा । न च परलोकसमीहा स भवति धनपालको मूर्खः ॥ ९ ॥

## सत्सङ्गप्रशंसा- १७

महाजनस्य संसर्गः कस्य नोन्नतिकारकः । पद्मपत्र-

स्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ १ ॥ मलयाचल-
गन्धेनत्विन्धनं चन्दनायते । तथा सज्जनसङ्गेन दुर्जनः
सज्जनायते ॥ २ ॥ चन्दनं शीतलं लोके चन्दनादपि च-
न्द्रमाः । चन्द्रचन्दनयोर्मध्ये शीतला साधुसङ्गतिः ॥ ३ ॥
करोति निर्मलाधारस्तुच्छस्यापि महर्घताम् । अम्बुनो
बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ४ ॥ हीयते
हि मतिस्तात हीनैः सह समागमात् । समैश्च समता-
मेति विशिष्टैश्च विशिष्टताम् ॥ ५ ॥ काचः काञ्चनसं-
सर्गाद्धत्ते मारकतीर्द्युतीः । तथा सत्संनिधानेन मूर्खो
याति प्रवीणताम् ॥ ६ ॥ यथोदयगिरौ द्रव्यं संनिकर्षेण
दीप्यते । तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते
॥ ७ ॥ यदि सत्सङ्ग निरतो भविष्यसि भविष्यसि ।
अथ दुर्जनसंसर्गे पतिष्यति पतिष्यति ॥ ८ ॥ सङ्गः स-
र्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह
कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥ ९ ॥ क्षुद्रोऽपि तनुते
तात तेजस्तेजस्वि सङ्गतः । अर्कसंपर्कतः पश्य दर्पणे
दहनद्युतिम् ॥ १० ॥ सन्तः सदैव गन्तव्या यद्यप्युप-

दिशन्ति न । या हि स्वैरकथास्तेषामुपदेशा भवन्ति ताः ॥ ११ ॥ अनपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः॥ १२॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम् । शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ १३ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् । सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ १४ ॥ सज्जनसङ्गो माभूद्यदि सङ्गो मास्तु तत्पुनः स्नेहः । स्नेहो यदि मा विरहो यदि विरहो मास्तु जीवितस्याशा ॥ १५ ॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ ॥ १६ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां नहि खलसङ्गमात्खलत्वम् । आमोदं कुसुमभवं मृदेव धत्ते मृद्गन्धं न हि कुसुमानि धारयन्ति ॥ १७ ॥ किं वा परेण बहुना परिजल्पितेन संसर्ग एव महतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलोच्छलितरत्नकृतालवालाः ॥ १८ ॥ जाड्यं धि-

यो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ १९ ॥ दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति । भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ २० ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जनवीक्षणेन । कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावपरिवर्तविधौ निदानम् ॥ २१ ॥ एके केचिद्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरवीणया संप्रयुक्ताः । एके तेषां सह गतिवशाद्दुस्तरं तारयन्ति केचित्तेषां ज्वलितहृदया रक्तमेवापिबन्ति ॥ २२ ॥ संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते मुक्ताहारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ २३ ॥ रे जीव सत्सङ्गमवाप्नुहि त्वमसत्यसङ्गं त्वरया विहाय । धन्यो-

ऽपि निन्दां लभते कुसङ्गात्सिन्दूरबिन्दुर्विधवाललाटे ॥ २४ ॥ असारसंसारपयोब्धिमध्ये निमज्जतां सद्भिरुदारवृत्तैः । महात्मभिः सङ्गतिरेव साध्या नान्यस्तदुत्तारविधावुपायः ॥ २५ ॥ सुजनः सुजनेन सङ्गतः परिपुष्णाति मतिं शनैः शनैः । परिपुष्टमतिर्विवेकवाञ्छनकैर्हेयगुणं विमुञ्चति ॥ २६ ॥ महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥२७॥ भाग्योदयेन बहुजन्मसमार्जितेन सत्सङ्गमं च लभते पुरुषो यदा वै । अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय हि तदोदयते विवेकः ॥ २८ ॥

## असत्सङ्गनिन्दा. १८

असत्सङ्गाद्गुणज्ञोऽपि विषयासक्तमानसः । अकस्मात्प्रलयं याति गीतरक्तो यथा मृगः ॥ १ ॥ आहृत्य रक्ष्यमाणाऽपि यत्नेनान्तविरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ २ ॥ अहो दुर्जन-

संसर्गान्मानहानिः पदे पदे । पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ ३ ॥ अणुरप्यसतां सङ्गः सद्गुणं हन्ति विस्तृतम् । गुणरूपान्तरं याति तक्रयोगाद्यथा पयः ॥ ४ ॥ दुर्वृत्तसङ्गतिरनर्थपरम्पराया हेतुः सतां भवति किं वचनीयमत्र । लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ ५ ॥

---

## पण्डितप्रशंसा. १९

शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ १ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २ ॥ निषेवते प्रशस्तानि निन्दितानि न सेवते । अनास्तिकः श्रद्धान एतत्पण्डितलक्षणम् ॥ ३ ॥ क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता । यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ४ ॥ यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे । कृतमेवास्य जानन्ति स वै प:

ण्डित उच्यते ॥ ५ ॥ यस्य कृत्यं न विघ्नन्ति शीत-मुष्णं भयं रतिः । समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ६ ॥ निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः । अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ ७ ॥ आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते । हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ८ ॥ न हृष्यत्यात्मसंमाने नावमानेन तप्यते । गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ९ ॥ प्रवृत्तवाक् चित्रकथ ऊहवान्प्रतिभानवान् । आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ १० ॥ आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता । यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ ११ ॥ अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा । विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥१२॥ कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् । पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम्॥१३॥ किं कुलेन विशालेन विद्याहीनस्य देहिनः । अकुलीनोऽपि यो विद्वान्दैवैरपि स पूज्यते ॥ १४ ॥ पण्डि-

ते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १५ ॥ प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ १६ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि । निरस्तपादपे देश एरण्डोपि द्रुमायते ॥ १७ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । न हि बन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ १८ ॥ स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ १९ ॥ विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ २० ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन साधुना । आल्हादितं कुलं सर्वं यथा चन्द्रेण शर्वरी ॥ २१ ॥ प्रियो मे यो भवेन्मूर्खः स पुराद्बहिरस्तु मे । कुम्भकारोऽपि यो विद्वान्स तिष्ठतु पुरे मम ॥ २२ ॥ सविद्यः पुरुषः श्रेष्ठो यत्र कुत्रापि तिष्ठति । तत्रैव भवति श्रीमान् पूजापात्रं च भूभुजाम् ॥ २३ ॥ सेनापत्यं च राज्यं च दण्डने-

तृत्वमेव च । सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ २४ ॥ पण्डितो हि वरं शत्रुर्न मूर्खो हितकारकः । वानरेण हतो राजा विप्रचौरेण रक्षितः ॥ २५ ॥ मातृवत्परदारांश्च परद्रव्याणि लोष्ठवत् । आत्मवत्सर्वभूतानि यः पश्यति स पण्डितः ॥ २६ ॥ गुणवदगुणवद्वा कुर्वता कार्यमादौ परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ २७ ॥ न पण्डिताः साहसिका भवन्ति श्रुत्वाऽपि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ २८ ॥ इभतुरगरथैः प्रयान्तु मूढा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगताऽपि काकपङ्क्तिः पुलिनगतैर्न समा हि राजहंसैः ॥ २९ ॥ क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात् । नासंपृष्टो व्युपयुङ्क्ते परार्थे तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ ३० ॥ वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं योधं कापुरुषं हयं गतरयं मूर्खं परि-

भ्राजकम् । राजानं च कुमन्त्रिभिः परिवृतं देशं च सोपद्रवं भार्यां यौवनगर्वितां पररतां मुञ्चन्ति ते पण्डिताः ॥ ३१ ॥ विद्याविनयोपेतो हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥ ३२ ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः । कुलजाया सा जाया केवलजाया तु केवलं माया ॥ ३३ ॥ यद्यपि भवति कुरूपो वस्त्रालङ्कारवेषपरिहीनः । सज्जनसभां प्रविष्टो राजति विद्याऽधिकः पुरुषः ॥ ३४ ॥ विद्याविलासमनसो धृतशीलशिक्षाः सत्यव्रता रहितमानमलापहाराः । संसारदुःखदलनेन सुभूषिता ये धन्या नरा विहितकर्म परोपकाराः ॥ ३५ ॥ संपूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम् । विद्वान्कुलीनो न करोति गर्वं गुणैर्विहीना बहु जल्पयन्ति ॥ ३६ ॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि । अभिनवमदलेखाश्यामगण्डस्थलानां न भवति बिसतन्तुर्वारणं वारणानाम् ॥ ३७ ॥

## मूर्खनिन्दा. २०

वरं पर्वत दुर्गेषु भ्रान्तं वनचरैः सह । न मूर्खजनसंसर्गः सुरेन्द्रभुवनेष्वपि ॥ १ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ २ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ३ ॥ मूर्खचिन्हानि पडिति गर्वो दुर्वचनं मुखे । विरोधी च विषादी च कृत्याकृत्यं न मन्यते ॥ ४ ॥ उपदेशोहि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ५ ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ ६ ॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः । अन्तरे तमसां दीपः शोभते नार्कतेजसाम् ॥ ७ ॥ न्यायशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ ८ ॥ अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः । अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ९ ॥

अनाहूतः प्रविशति ह्यपृष्टो बहु भाषते । अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ १० ॥ अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च । कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ११ ॥ परं क्षिपति दोषेण वर्तमानः स्वयं तथा । यश्च कुध्यत्यनीशानः स च मूढतमो नरः ॥ १२ ॥ अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् । यतस्तौ स्वल्पदुःखाय यावज्जीवंजडो दहेत् ॥ १३ ॥ गुणिगणगणनारम्भे न पतति कठिनी सुसम्भ्रमाद्य स्य । तेनाम्बा यदि सुतिनी वद बन्ध्या कीदृशी भवति ॥ १४ ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति ॥ १५ ॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मर्त्यलोके भुवि भारभूता मानुष्यरूपेण मृगाश्चरन्ति ॥ १६ ॥ मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभानाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ १७ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि

मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटापि शोभते न नेत्रहीना कनकैरलंकृता ॥ १८ ॥ यदा किंचिज्ज्ञोहं द्विप इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः । यदा किंचित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ॥ १९ ॥ मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणाः निश्चिन्तो बहुभोजनोऽतिमुखरो रात्रिं दिवा स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमाने समः प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ २० ॥ मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः श्रीमच्छङ्करभाष्यतो भगवती गीताऽप्यधीता न यैः । सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वाऽपि किंचित्ततो भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते ॥ २१ ॥ शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्

मे मतिः । खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥ १४ ॥ स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् । न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥ १५ ॥ स्वगुणान्परदोषांश्च वक्तुं प्रार्थयितुं परान् । याचितारं निराकर्तुं सतां जिह्वा जडायते ॥ १६ ॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण साधुवृत्तिनामस्थायिन्यो विपत्तयः ॥ १७ ॥ अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः । उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १८ ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ १९ ॥ तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ २० ॥ बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः । वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥ २१ ॥ सुमुखा सर्वभूतानां प्रशान्ताः शंसितव्रताः । सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥ २२ ॥ कुसुमस्तबकस्येव द्वे वृत्ती स्तो मनस्विनः । मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽ

थवा ॥ २३ ॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति कर-
द्वयम् । अहो सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥२४
किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः । न हि स्वदेह-
शैत्याय जायन्ते चन्दनद्रुमाः ॥ २५ ॥ धनिनोऽपिनिरु-
न्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते
महामहिमशालिनः ॥ २६ ॥ स्थिरा शैली गुणवतां
खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्य-
याऽपि न नाश्यते ॥ २७ ॥ उदये सविता रक्तो रक्त-
श्चास्तमये तथा ॥ संपत्तौ च विपत्तौ च महतामेकरू-
पता ॥ २८ ॥ विवेकः सह संपत्त्या विनयो विद्यया
सह । प्रभुत्वं प्रश्रयोपेतं चिन्हमेतन्महात्मनाम्॥ २९॥
स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । कर्पूरः
पावकस्पृष्टः सौरभं लभतेतराम् ॥ ३० ॥ यस्य जना न
वदन्ति महत्त्वं नो समरे मरणंविजयं वा । न श्रुतदान-
महाधनतां वा तस्य भवः कृमिकीटसमानः ॥ ३१ ॥
इयमुन्नतसत्त्वशालिनां महतां काऽपि कठोरचित्तता ।
उपकृत्यभवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ३२॥

आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने ।
छेदतापननिघर्षताडनैर्नान्यभावमुपयाति काञ्चनम्॥२३॥
वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं
चरन्ति। एवं कुलीना व्यसनाभिभूता न नीचकर्माणि
समाचरन्ति ॥ २४ ॥ आक्रोशितोपि सुजनो न वदत्य-
वाच्यं निष्पीडितो मधुरमुद्वमतीक्षुदण्डः। नीचो जनो
गुणशतैरपि सेव्यमानो हास्येन तद्वदति यत्कलहेऽप्य-
वाच्यम् ॥ २५ ॥ तुङ्गात्मनां तुङ्गतराः समर्था मनोर-
थान् पूरयितुं न नीचाः। धराधरा एव धराधराणां निदा-
घदाहं शमितुं न नद्यः ॥ २६ ॥ ये शान्तदान्ताः श्रुति-
पूर्णकर्णा जितेन्द्रियाः स्त्रीविषये निवृत्ताः। प्रतिग्रहे संकु-
चिताभिहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ २७ ॥
संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम्।
तंभुवनत्रयतिलकं जनयति जननी सुतं विरलम्॥२८॥
अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः। पर-
परिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ २९ ॥
छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके ।

इति विमृशन्तः सन्तः संतप्यन्ते न ते विपदाः ॥ ४० ॥ करणं वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ ४१ ॥ सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ४२ ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः । नीचो वदति न कुरुते न वदति सुजनः करोत्येव॥४३॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः । पंगुःपरधनहरणे स जयति लोकत्रये पुरुषः ॥ ४४ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः स एव ॥४५॥ विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ४६ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति । दानं च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ ४७ ॥ केनाञ्जितानि नयनानि

मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्मयूरान् । कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति विनयं कुलजेषु पुंसु ॥ ४८ ॥ न हि भवति वियोगः स्नेहविच्छेदहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित् । घनतिमिरनिबद्धो दूरसंस्थेऽपि चन्द्रः किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ ४९ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ५० ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ५१ ॥ करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् । हृदि स्वच्छा वृत्तिः श्रुतमधिगतैकव्रतफलं विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ५२ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां

व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् । भक्तिर्ब्रह्मणि शक्तिरात्मदमने संसर्गमुक्तिः खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ५३ ॥ धर्मे तत्परता मुखे मधुरता दाने समुत्साहिता मित्रेऽवञ्चकता गुरौ विनयता चित्तेऽतिगम्भीरता । आचारे शुचिता गुणे रसिकता शास्त्रेऽतिविज्ञानिता रूपे सुन्दरता हरौ भजनिता सत्स्वेव संदृश्यते ॥ ५४ ॥ गर्वं नोद्वहते न निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते । श्रुत्वा वाक्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥ ५५ ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः स्वार्थान्संपादयन्तो विततबहुतरारम्भयत्नः परार्थे । क्षान्त्यैवाक्षेपरुक्षाक्षरमुखरमुखान्दुर्मुखान्दुःखयन्तः सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्थनीयाः ॥ ५६ ॥ अज्ञातगोत्रा विदितात्मतत्त्वा लोकस्य दृष्ट्या जडवद्भिभान्तः । चरन्ति भूतान्यनुकम्पमानाः सन्तो यदृच्छोप-

नतोपभोग्याः ॥ ५७ ॥ कुलं पवित्रं जननी कृतार्था विश्वम्भरा पुण्यवती च तेन । अपारसच्चित्सुखभूम्न्यनन्ते लीनं परे ब्रह्मणि यस्य चेतः ॥ ५८ ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ ५९ ॥ मन्नोः शृङ्गं सप्ततालप्रमाणं कल्याणाद्रिः सर्षपस्यैकदेशः । बिन्दुः सिन्धुः सिन्धुरप्येकबिन्दु रब्धौ लुब्धे साधुनीचोपकारे ॥ ६० ॥

---

## दुर्जननिन्दा. २२

सद्भिः संबोध्यमानोऽपि दुरात्मा पापपूरुषः । घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ १ ॥ खलः सर्षपमात्राणि परछिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥२॥ मलिनैश्चेन सङ्गस्ते नीचैः काककुलैः पिक । श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥३॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः ॥ हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ४ ॥ न विना परवादेन रमते

दुर्जनोजनः । काकः सर्वरसान् भुङ्क्ते विनाऽमेध्यं न तृप्यति ॥ ५ ॥ दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ६ ॥ उपकारोऽपि नीचानामपकारो हि जायते । पयः पानं भुजङ्गानां केवलं विषवर्द्धनम् ॥ ७ ॥ दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ ८ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन् । सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥ ९ ॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः। सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ १० ॥ दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ ११ ॥ दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि । अकालकुसुमानीव भयं संजनयन्ति मे ॥ १२ ॥ दुर्जनो दोषमादत्ते दुर्गन्धमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः॥ १३ ॥ दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ १४ ॥ दु-

र्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाऽग्रे हृदि हालाहलं विषम् ॥ १५ ॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १६ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किंयाति वायसः कलहंसताम् ॥ १७ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ १८ ॥ अशक्ताः शक्तिमात्मीयां श्लाघन्ते खलु दुर्जनाः । ते भवन्त्युपहासाय महतामेव सन्निधौ ॥ १९ ॥ अहो बत महत्कष्टं विपरीतमिदं जगत् । येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ २० ॥ मनस्यन्यद्वचस्यन्यकार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं सदात्मनाम् ॥ २१ ॥ खलः करोति दुर्वृत्तं नूनं फलति सत्सु। दशाननोऽहरत्सीतां बन्धनंच महोदधेः॥ २२॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ २३ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं क्रोधसंयुक्तं

त्रिविधं धूर्तलक्षणम् ॥ २४ ॥ कापुरुषः कुक्कुरश्च भोज-नैकपरायणः । लालितः पार्श्वमायाति वारितो न च गच्छति ॥ २५ ॥ दुर्जनो दूषयत्येव सतां गुणगणं क्ष-णात् । मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥२६॥ खलानां कण्टकानां च द्विविधैव प्रतिक्रिया । उपान-न्मुखभङ्गो वा दूरतो वाऽपि वर्जनम् ॥ २७ ॥ दुर्जनः स्वस्वभावेन परकार्यं विनश्यति । नोदरतृप्तिमायाति मूषको वस्त्रभक्षकः ॥ २८ ॥ संत्यज्य सर्पवद्दोषान् गु-णान् गृह्णाति पण्डितः । दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः ॥ २९ ॥ यस्मिन्वंशे समुत्पन्नस्तमेव निजचे-ष्टितैः । दूषयत्यचिरेणैव घुणकीट इवाधमः ॥ ३० ॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य विषं पुच्छे सर्वाङ्गे दुर्जनो विषम् ॥ ३१ ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतु मपि द्वन्द्व-मेतद्दुष्टस्य लक्षणम् ॥ ३२ ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामं च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ ३३ ॥ शा-

स्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ ३४ ॥ विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः । यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ३५ ॥ विदुरेप्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः । न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ३६ ॥ रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः । अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ३७ ॥ त्यक्त्वाऽपि निजप्राणान् परहितविघ्नं खलः करोत्येव । कवले पतिता सद्यो वमयति खलु मक्षिकाऽन्नभोक्तारम् ॥ ३८ ॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत् खल जनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ३९ ॥ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् । सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति ॥ ॥ ४० ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमा-

त्रमादत्ते । पुष्पेफले विरागी क्रमेलकः कण्टकौघमिव ॥ ४१ ॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः । पाणौ पयसा दग्धे तक्रं फूत्कृत्य बालकः पिबति ॥ ४२ ॥ अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः । तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ ४३ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ ४४ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः । तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥ ४५ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ४६ ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः । रुधिरादानादधिकं दुनोति कर्णे क्वणन्मशकः ॥ ४७ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ ४८ ॥ उपकारपरः स्वभावतः सततं

---

१ उष्ट्रः.

सर्वजनस्य सज्जनः । असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ ४९ ॥ अपि वेत्ति षडक्षराणि चेद्दुर्पदेष्टुं शितिकण्ठमिच्छति । वसनाशनमात्रमस्ति चेद्धनदादप्यतिरिच्यते खलः ॥ ५० ॥ विद्यया विमलयाऽप्यलंकृतो दुर्जनः सदासि मास्तु कश्चन । साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः॥ ५१ ॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ५२ ॥ तथाऽरिभिर्न व्यथते शिलीमुखैर्हतो दिगन्ते हृदयेन दूरतः । यथा खलानां कुधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ ५३ ॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम् । एकाऽपि पूर्णमुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥ ५४ ॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ ५५ ॥ प्राक् पादयोः पतति खादति

पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥ ५६ ॥ ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्था-विरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ५७ ॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भापते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किंचित्क्वापि न साहसं वितनुते देहे चिरंदूयते नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ ५८॥ कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते शार्दुलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तुसर्वान्नरान् ॥ ५९ ॥

---

## धनप्रशंसा- २३

ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ।

शशिना तुल्यवंशोऽपि निर्धनः परिभूयते ॥ १ ॥ धनं सञ्चय काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ २ ॥ न नरस्य नरो दासो दासश्चार्थस्य भूपते । गौरवं लाघवं वाऽपि धनार्धननिबन्धनम् ॥ ३ ॥ वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किंकराः ॥ ४ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ५ ॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ॥ ६ ॥ स्वामित्वं चैव दातृत्वं धनिकत्वं तपः फलम् । एनसः फलमर्थित्वं दासयत्वं च दरिद्रता ॥ ७ ॥ संसृतौ व्यवहाराय सारभूतं धनं स्मृतम् । अतो यतेत तत्प्राप्त्यै नरो ह्युपायसाहसैः ॥ ८ ॥ सुनिर्धनत्वं प्राप्यैके मरणं भेजिरे जनाः । ग्रामायैकेऽचलायैके नाशायैके प्रवव्रजुः ॥ ९ ॥ उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् । दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥ १० ॥ धनमाहुः परं धर्मं

धने सर्वं प्रतिष्ठितम् । जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ ११ ॥ न हि तद्विद्यते किञ्चिद् यदर्थेन न सिध्यति ॥ यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ १२ ॥ इह लोके हि धनिनां परोऽपि स्वजनायते । स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ १३ ॥ पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते । वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ १४ ॥ अशनादिन्द्रियाणीव स्युः कार्याण्यखिलान्यपि । एतस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ १५ ॥ अस्ति यावत्तु सधनस्तावत्सर्वैस्तु सेव्यते । निर्धनस्त्यज्यते भार्यापुत्राद्यैः सगुणोऽप्यतः ॥ १६ ॥ धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ ॥ १७ ॥ नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य । घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ १८ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं धनं धनम् ।इत्थमेव निनदः प्रवर्तते किं पुनर्जनः सचेतनः ॥ १९ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते

न दारिद्र्यम् । अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ २० ॥ अहोनुकष्टं सततं प्रवासस्ततोऽतिकष्टः परगेहवासः । कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ २१ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् । तृणानि शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ २२ ॥ यदा तु भाग्यक्षयपीडितां दशांनरः कृतान्तोपहितां प्रपद्यते । तदाऽस्य मित्राण्यपि यान्त्यमित्रतां चिराऽनु रक्तोऽपि विरज्यते जनः ॥ २३ ॥ शूरः सुरूपः सुभगश्च वाग्मी सर्वाणि शास्त्राणि विदांकरोति । अर्थं विना नैव यशश्च मानं प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥ २४ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत् तस्माद्द्रव्यमुपार्जय श्रृणु सखे द्रव्येण सर्वे वशाः ॥ २५ ॥ पद्मे मूढजने ददासि द्रविणं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः ।

मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ २६ ॥ त्यजेत्क्षुधार्तो महिलां सपुत्रां खादेत्क्षुधार्ता भुजगी स्वमण्डम् । बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥ २७ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौग्ध्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मी तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ २८ ॥मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा । सर्वं प्रणश्यति समं वित्तहीनो यदा पुरुषः ॥ २९ ॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ ३०॥त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च । तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ ३१ ॥ धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति । धनेभ्यः परो बान्धवो नास्ति लोके धना-

न्यर्जयध्वं धनान्यर्जयध्वम् ॥ ३२ ॥ बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते । न छन्दसा क्वापि समुद्धृतं कुलं हिरण्यमेवाश्रय निष्फला गुणाः ॥ ३३ ॥ हेतुप्रमाणयुक्तं वाक्यं नश्रूयते दरिद्रस्य ॥ अप्यतिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य॥३४॥ शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म । न विराजन्ति हि सर्वे वित्तहीनस्य पुरुषस्य ॥ ३५ ॥ वाणी दरिद्रस्य शुभा हिताऽपि ह्यर्थेन शब्देन च संप्रयुक्ता । न शोभते वित्तवतः समीपे भेरीनिनादोपहतेव वीणा ॥ ३६ ॥

---

## धननिन्दा. २४

जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥ १ ॥ अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितारमपि त्यक्त्वा निःस्वं गच्छन्ति दूरतः ॥ २ ॥ वरं हालाहलं पीतं सद्यः

प्राणहरं विषम् । न द्रष्टव्यं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥ ३ ॥ धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते । लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ ४ ॥ राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ५ ॥ अर्थस्योपार्जने दुःखमर्जितस्यापि रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ ६ ॥ अविश्वासविधानाय महापातकहेतवे । पितृपुत्रविरोधाय हिरण्यायनमोऽस्तु ते ॥ ७ ॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति । विकृतयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥ ८ ॥ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥ ९ ॥ तानीन्द्रियाण्यविकलानि मनस्तदेव सा बुद्धिरप्रतिहता वचनं तदेव । अर्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ १० ॥ आपद्गतं हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान्प्र-

पश्यसि घटान् जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥११॥ केचिद्धनं निदधते भुवि नोपभोगं कुर्वन्ति लोभवशगा न विदन्ति केचित्। अन्येन गोपितमथान्यजना हरन्ति तच्चेन्नदीपरिसरे जलमेव हन्त ॥१२॥

---

## गृहस्थाश्रमप्रशंसा. २९

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ १ ॥ यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्। तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ २ ॥ यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः। तथा गृहस्थमाश्रित्य वर्तन्ते सर्वआश्रमाः ॥ ३ ॥ यस्मात्त्रयोऽप्याश्रमिणो दानेनान्नेन चान्वहम्। गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ ४ ॥ स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता। सुखं चेहेच्छता नित्यं योऽधार्यो दुर्बलेन्द्रियैः ॥ ५ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा। एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः

॥ ६ ॥ सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥ ७ ॥ यदि रामा यदि च रमा यदि तनयो विनयधीगुणोपेतः । तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ ८ ॥ सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः । आतिथ्यं विभुचिन्तनं प्रतिदिनं मिष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ ९ ॥ मानुष्यं वरवंशजन्म विभवो दीर्घायुरारोग्यता सन्मित्र सुसुतः सती प्रियतमा भक्तिश्च नारायणे । विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिस्ते पुण्येन विना त्रयोदश गुणाः संसारिणां दुर्लभाः ॥ १० ॥

## गृहस्थाश्रमनिन्दा- २६

यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि । यत्र नास्ति गुरुगौरवपूजा तानि किं बत गृहाणि वनानि ॥ १ ॥ विधिना खलु वञ्चिता वयं वित-

रीतुं वदवे न शक्नुमः । अपि भैक्ष्यमकिंचनत्वतो धिगिदं जन्म निरर्थकं गतम् ॥ २ ॥ निःस्वो भवेद्यदि गृही निरयी स नूनं भोक्तुं न दातुमपि यः क्षमतेऽणुमात्रम् । पूर्णोऽपि पूर्तिमभिमन्तुमशक्नुवन्यो मोहेन शं न मनुते खलु तत्र तत्र ॥ ३ ॥ क्रोशन्तः शिशवः सवारि सदनं पङ्काप्लुतं चाङ्गणं शय्या दंशवती च रूक्षमशनं धूमेन पूर्णं गृहम् । भार्या निष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णः सदा स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् ॥ ४ ॥ तावद्विद्याऽनवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव । यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्धेवावा नास्तितैलं न च लवणमपीत्यादिवाचां प्रचारः ॥ ५ ॥

## संतोषप्रशंसा- २७

सर्वत्रसंपदस्तस्य संतुष्टं यस्य मानसम् । उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ १ ॥ अकिञ्चनस्य दा-

न्तस्य शान्तस्य समचेतसः । सदा संतुष्टमनसः सर्वाः सुखमयाः दिशः ॥ २ ॥ आत्माधीनशरीराणां स्वपतां निद्रया स्वया । कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥ ३ ॥ अकृत्वा परसन्तापमगत्वा खलनम्रताम् । अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ॥ ४ ॥ यो मे गर्भगतस्यापि वृत्तिं कल्पितवान्प्रभुः । शेषवृत्तिविधानाय न वा सुप्तो न वा मृतः ॥ ५ ॥ सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ६ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा यान्ति दैन्यमत्रातिरिच्यते ॥ ७ ॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः । जगत्संमोहजननी यैराशाशीविषी जिता ॥ ८ ॥ न योजनशतं दूरं बाध्यमानस्य तृष्णया । सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ ९ ॥ वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता । गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥ १० ॥ येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चि-

त्रिता येन स मे वृत्तिं विधास्यति ॥ ११ ॥ धमार्थ यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १२ ॥ अधोऽधः पश्यतः कस्य महिमा नोपचीयते । उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ १३ ॥ विश्वम्भर भर त्वं मां विश्वस्माद्वा बहिः कुरु । उभयोर्यद्यशक्तोऽसि त्यज विश्वम्भराभिधाम् ॥ १४ ॥ सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् । सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ १५ ॥ आपदर्थं धनं रक्षेन्महतां कुत आपदः । कदाचित्कुपितो दैवः संचितं चापि नश्यति ॥ १६ ॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति । कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं सन्तोष एव पुरुषस्य परं निधानम् ॥ १७ ॥ वय मिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ १८ ॥ गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो

यूथिकां तां त्यक्त्वाऽऽशु गतः स चन्दनवनं, पश्चात्सरोजं गतः । बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः॥११॥

## तृष्णानिन्दा. २८

तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥१॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ २ ॥ तृष्णे त्वमपि तृष्णान्धा त्रिपु स्थानेपु वर्तसे । व्याधितेष्वनपत्येपु जरापरिणतेषु च ॥ ३ ॥ अपि मेरूपमं प्राज्ञमपि शूरमपिस्थिरम् । तृणी करोति तृष्णैका निमेषेण नरोत्तमम् ॥ ४ ॥ आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ ५ ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमविलम्बितम् ॥ ६ ॥ न जातु कामः कामानामुपभोगेन शाम्य-

ति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ७ ॥ तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् । जिताक्षस्य तृणं नारी निस्पृहस्य तृणं जगत् ॥ ८ ॥ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु । अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ९ ॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ १० ॥ यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् ॥ जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ ११ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥ तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १२ ॥ सप्तद्वीपाधिपतयो नृपावैन्यगदादयः । अर्थैः कामैर्गता नान्तं तृष्णाया इति शुश्रुमः ॥ १३ ॥ सहस्रेभ्यः सहस्रेभ्यः कश्चिदुत्थाय वीर्यवान् । भिनत्ति वासनाजालं पञ्जरं केसरी यथा ॥ १४ ॥ आशाया ये दासास्ते दासाः सर्वलोकस्य । आशा येषां दासी तेषां दासायते लोकः ॥ १५ ॥ यान्येवैतानि दुःखानि दुर्जराण्युन्नतानि च । तृष्णावल्याः

फलानीह तानि दुःखानि राघव ॥ १६ ॥ यावतीयावती जन्तोरिच्छोदेति यथा यथा। तावती तावती दुःखबीजमुष्टिः प्ररोहति ॥ १७ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। नालमेकस्य तत्सर्वमिति पश्यन्नमुह्यति ॥ १८ ॥ हते भीष्मे हते द्रोणे कर्णे च त्रिदिवं गते। आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ॥ १९ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम्। यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ २० ॥ उपकारः परो धर्मः परार्थं कर्म नैपुणम्। पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥ २१ ॥ विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः। निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ २२॥ वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम्। शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २३ ॥ खलोलापाः सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शू-

वदनाच्च बहिर्यान्ति प्राणा याच्ञाक्षरैः सह । ददामी-त्यक्षरैर्दातुः पुनः कर्णाद्विशन्ति हि ॥ ५ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते । दाता चेत्तद्विजानीयाद्द्यात्स्वपिशितान्यपि ॥ ६ ॥ तीक्ष्णधारेण खड्गेन वरं जिव्हा द्विधाकृता । न तु मानं परित्यज्य देहि देहीति भाषितम् ॥ ७ ॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयोर्मध्ये दोलायत्यर्थिनां मनः ॥ ८ ॥ एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता । दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ ९ ॥ न क्वचिच्च बहिर्यान्ति मानिनां प्रार्थनागिरः । यदि निर्यातुमिच्छन्ति तदा प्राणपुरःसराः ॥ १० ॥ मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति । अपि निर्वाणमायाति नानलो याति शीतताम् ॥ ११ ॥ मनस्विनो न मन्यन्ते परतः प्राप्य जीवनम् । बलिभुग्भ्यो हि काकेभ्यः स्पृहयन्ति न कोकिलाः ॥१२॥ काक आहूयते काकान् याचको न तु याचकान् । काकयाचकयोर्मध्ये वरं काको न याचकः ॥ १३ ॥ तृणादपि लघुस्तूलस्तूलादपि च याचकः ।

वायुना किं न नीतोऽसौ मामेवं याचयिष्यति ॥१४॥
गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाऽधुना।
ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा मनागपि॥
॥ १५ ॥ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुल-
भेन। धनिषु न दैन्यं विदधति ते किल पशवो वयं सु-
धियः ॥ १६ ॥ तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदौ-
र्जित्यम्। तत्सौभाग्यं पुंसां यदेतदप्रार्थनं नाम ॥१७॥
अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः। वान-
रीमिव वाग्देवीं नर्तयन्ति गृहे गृहे ॥ १८ ॥ किमकारि
न कार्पण्यं कस्यालङ्घि न देहली। अस्य पापोदर-
स्यार्थे किमनाटि न नाटनम् ॥ १९ ॥ अहितहितवि-
चारशून्यबुद्धेः श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य। उदर-
भरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः२०
अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि।
गणयति न तिरस्कारं दानान्धविलोचनो नीचः॥२१॥
तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः शूरः
सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः। दक्षो

धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठाऽन्वितो यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ २२ ॥ द्वारे द्वारे परेषामविरलमटति द्वारपालैः करालैर्दृष्टो योऽप्याहतःसन् रणति गणयति स्वापमानं तु नैव । क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं श्राम्यत्या-स्मोदरार्थे कथमहह शुना नो समो याचकः स्यात्॥२३॥

## मद्यपानादिदुर्व्यसननिन्दा.३०

एकतश्चतुरो वेदा ब्रह्मचर्यं तथैकतः । एकतः सर्वपापानि मद्यपानं तथैकतः ॥ १ ॥ मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः । कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ २ ॥ अयुक्तं बहु भाषन्ते यत्र कुत्रापि शेरते । नग्ना विक्षिप्य गात्राणि बालका इव मद्यपाः ॥ ३ ॥ मत्तो हिनस्ति सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या । मातरमपि कामयते सावज्ञं मद्यपानमत्तः सन् ॥ ४ ॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति । पापं कृत्वा दुर्गतिं

यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ ५ ॥ दारिद्र्यशीलोऽपि नरस्तमाखुं नैव मुञ्चति । निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ ६ ॥ न स्वादु नौषधमिदं न च वा सुगन्धि नाक्षिप्रियं किमपि शुष्कतमाखुचूर्णम् । किं चाक्षिरोगजनकं च तदस्य भोगे बीजं नृणां नहि नहि व्यसनं विनाऽन्यत् ॥ ७ ॥ न श्रियस्तत्र तिष्ठन्ति द्यूतं यत्र प्रवर्तते । न वृक्षजातयस्तत्र विद्यन्ते यत्र पावकः ॥ ८ ॥ द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम् । तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ ९ ॥ वेश्याऽसौमदनज्वाला रूपेन्धनसमेधिता । कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १० ॥ कथं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः । दिवसे दिवसे मरणं परस्य यच्चित्तरञ्जनं वृत्तिः ॥ ११ ॥ एता हसन्ति च रुदन्ति च वित्तहेतोर्विश्वासयन्ति पुरुषं न च विश्वसन्ति । तस्मान्नरेण कुलशीलसमन्वितेन वेश्याः श्मशानघटिका इव वर्जनीयाः ॥ १२ ॥ तपोव्रतयशोविद्याकुलीनत्वं दमोवयः।

छिद्यन्ते वेश्यया सद्यः कुठारेण लता यथा ॥ १३ ॥ बधो बन्धो धनभ्रंशस्तापः शोकः कुलक्षयः । आयासः कलहो मृत्युर्लभ्यन्ते पारदारिकैः ॥ १४ ॥ परदारा न गन्तव्या पुरुषेण विपश्चिता । यतो भवन्ति दुःखानि नृणां नास्त्यत्र संशयः ॥ १५ ॥ अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः । विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत् ॥ १६ ॥ परदारा नगन्तव्याः सर्ववर्णेषु कर्हिचित् । नहीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥ १७ ॥ मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १८ ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । संपूर्णेऽपि तडागे काकःकुम्भोदकं पिबति ॥ १९ ॥ हरणं च परस्वानां परदाराऽभिमर्शनम् । सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत ॥ २१ ॥ अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराऽभिमर्शम् । दम्भं स्तैन्यं पैशुनं मद्यपानं न से-

वते यश्च सुखी सदैव ॥ २२ ॥ कुत्र विधेयो यत्नो विद्याऽभ्यासे सदौषधे दाने । अवधीरणा क कार्या खलपरयोपित्परधनेषु॥२३॥परिहरत पराङ्गनानुषङ्गं वत यदि जीवितमस्ति वल्लभं वः । हर हर हरिणीदृशो निमित्तं दश दशकन्धरमौलयो लुठन्ति ॥ २४ ॥ रहसि रचितमेतज्जारकर्मात्र नीचैर्लशुनमिव सुभुक्तं याति लोके प्रसिद्धिम् । तदिह सकलगर्ह्यं नैव विद्वान् विदध्यात् क्षणिकसुखकृते स्याद्यत्प्रतिष्ठार्थनाशः ॥ २५ ॥ रक्षःपतिर्जनकजाहरणेन वाली तारापहारविधिना स च कीचकोऽपि । पाञ्चालिकाप्रमथनान्निधनं जगाम तस्मात्कदाऽपि परदाररतिं न कुर्यात् ॥ २६ ॥ नहीदृशमनायुष्यं लोके किंचन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् ॥ २७ ॥ व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ २८ ॥

## राजप्रकरणम्. ३१

राजानं प्रथमं विन्देत्ततोभार्यां ततो धनम् । राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ १ ॥ धार्मिकं पालनपरं सम्यक्परपुरंजयम् । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥ २ ॥ पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ ३ ॥ सदाऽनुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ ४ ॥ सर्वदेवमयो राजा मनुना संप्रकीर्तितः । तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ ५ ॥ सर्वदेवमयस्यापि विशेषो भूपतेरयम् । शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ ६ ॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ७ ॥ यस्य प्रसादे पद्माऽऽस्ते विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ॥ ८ ॥ निकटस्थं दहत्यग्निर्नतु दूरापसर्पितम् । कुलं दहति राजाग्निः सपशुद्रव्यबान्धवम् ॥ ९ ॥ पात्रे

त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥ १० ॥ आक्षेपवचनं तस्य न वक्तव्यं कदाचन । अनुकूलं प्रियं चास्य वक्तव्यं जनसंसदि ॥ ११ ॥ सर्वलोकव्यवहारस्थितिर्नीत्यां विना नहि । यथाऽशनैर्विना देहस्थितिर्नस्याद्धि देहिनाम् ॥ १२ ॥ अतः सदा नीतिशास्त्रमभ्यसेद्यत्नतो नृपः । यद्विज्ञानान्नृपाद्याश्च शत्रुजिल्लोकरञ्जकाः ॥ १३ ॥ नृपस्य परमो धर्मः प्रजानां परिपालनम् । दुष्टानां निग्रहो नित्यं न नीत्या ते विना ह्युभे ॥ १४ ॥ यदि न स्यान्नरपतिः सम्यङ्नेताः ततः प्रजाः । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ १५ ॥ न तिष्ठन्ति स्वस्वधर्मे विना पालेन वै प्रजाः । प्रजया तु विना स्वामी पृथिव्यां नैव शोभते ॥ १६ ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥ १७ ॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषांन्यायवर्तिनाम् ॥ १८ ॥ यथा मधु समादत्ते रक्षन् पुष्पाणि षट्-

प्रदाः । तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १९ ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । माला-
कार इवारामे न यथाङ्गारकारकः ॥ २० ॥ यस्मात्त्रस्य
न्ति भूतानि मृगव्याधान्मृगा इव । सागरान्तामपि
महीं लब्ध्वा स परिहीयते ॥ २१ ॥ मोहाद्राजा स्वयं
राष्ट्रं यः कर्षत्यनवेक्षया । सोऽचिराद्भ्रश्यते राज्याज्जीवि-
ताच्च सबान्धवः ॥ २२ ॥ नित्यमुद्यतदण्डः स्यान्नित्यं
विवृतपौरुषः । नित्यं संवृत्तसर्वार्थो नित्यं छिद्रानुसार्यरेः
॥ २३ ॥ गजाश्वरथयानं तु प्रातःसायं सदाऽभ्यसेत् ।
व्यूहाभ्यासं सैनिकानां स्वयं शिक्षेच्च शिक्षयेत् ॥ २४ ॥ का-
मक्रोधौ तु संयम्य योऽर्थान्धर्मेण पश्यति । प्रजास्त-
मनुवर्तन्ते समुद्रमिव सिन्धवः ॥ २५ ॥ व्यवहारविदः
प्राज्ञा वृत्तशीलगुणान्विताः । रिपौ मित्रे समा ये च
धर्मज्ञाः सत्यवादिनः ॥ २६ ॥ निरालसा जितक्रोध-
कामलोभाः प्रियंवदाः । राज्ञा नियोजितव्यास्ते सभ्याः
सर्वासु जातिषु ॥ २७ ॥ एकद्वित्रिचतुर्वारं व्यवहा-
राननुचिन्तनम् । कार्यं पृथक् पृथक् सभ्यै राज्ञा श्रेष्ठो-

त्तैः सह ॥ २८ ॥ यथा बिजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ २९ ॥ लोकानुग्रहकर्तारः प्रवर्द्धन्ते नरेश्वराः । लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ ३० ॥ विद्या कलानां वृद्धिस्स्यात्तथा कुर्यान्नृपः सदा । विद्याकलोत्तमान्दृष्ट्वा वत्सरे पूजयेच्च तान् ॥ ३१ ॥ अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् । विशेषतोऽसहायेन किन्तु राज्यं महोदयम् ॥ ३२ ॥ मौलान् शास्त्रविदः शूरान् लब्धलक्षान्कुलोद्गतान् । सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ ३३ ॥ दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ ३४ भृत्यं परीक्षयेन्नित्यं विश्वास्यं विश्वसेत्सदा । नैव जातिर्न च कुलं केवलं लक्षयेदपि ॥ ३५ ॥ कर्मशीलगुणाः पूज्यास्तथा जातिकुले न हि । न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ ३६ ॥ अधिकारे क्षमं दृष्ट्वा ह्यधिकारे नियोजयेत् । नाधिकारं चिरं दद्याद्यस्मै कस्मै सदा नृपः ॥ ३७ ॥ अधिकारमदं

पीत्वा को न मुह्येत्पुनश्चिरश्च ॥ अतः कार्यक्षमं दृष्ट्वा कार्येऽन्यस्मिन्नियोजयेत् ॥ ३८ ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः । इति महति विरोधे वर्तमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ३९ ॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदादास्येन निर्विद्यते । निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेस्वभिद्रुह्यति ॥ ४० ॥ सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहीधर्मयशःसमूहः । दुर्मन्त्रिणा नाशयते तथैव एवं पुरावृत्तविदो वदन्ति ॥ ४१ ॥ स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किं प्रभुः । सदाऽनुकूलेषु हि कुर्वते स्थितिं नृपेष्वमात्येषु च सर्वसंपदः ॥ ४२ ॥ नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये सौधविहारसाराः । विडालवृन्दार्पितदुग्धपूराः स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥ ४३॥ राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः । भृत्या

भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥ ४४ ॥ ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः । तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥ ४५ ॥ ग्रामान्पुराणि देशांश्च स्वयं संवीक्ष्य वत्सरे । अधिकारिगणैः काश्च रञ्जिताः काश्च कर्षिताः ॥ ४६ ॥ प्रजास्ताः साधुभूतेन व्यवहारं विचिन्तयेत् । न भृत्य पक्षपाती स्यात्प्रजापक्षं समाश्रयेत् ॥ ४७ ॥ प्रजाशतेन संद्विष्टं संत्यजेदधिकारिणम् । अमात्यमपि संवीक्ष्य सकृदन्यायगामिनम् ॥ ४८ ॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ४९ ॥ इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् । जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ ५० ॥ न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः । बुद्धितो मित्रतश्चापि सततं वसुधाधिपः ॥ ५१ ॥ सर्वस्मादधिको दाता शूरस्त्वं धार्मिको ह्यसि। इति वाचं न शृणुयात् श्रावका वञ्चकास्तु ते ॥ ५२ ॥ आत्मानं प्रथमं राजा विनयेनोपपादयेत् । ततः पुत्रां-

स्ततोऽमात्यांस्ततो भृत्यांस्ततः प्रजाम् ॥ ५३ ॥ यौवनं जीवितं चित्तं छाया लक्ष्मीश्च स्वामिता । चञ्चलानि षडेतानि ज्ञात्वा धर्मरतो भवेत् ॥ ५४ ॥ सुजनैः संगतं कुर्यात् धर्माय च सुखाय च । सेव्यमानस्तु सुजनैर्महानतिविराजते ॥ ५५ ॥ नित्यं मानोपहारिण्या वाचा प्रल्हादयेज्जगत् । उद्वेजयति भूतानि क्रूरवाक् धनदोऽपिसन् ॥ ५६ ॥ दायादानामैकमत्यं राज्ञः श्रेयस्करं परम् । अतः स्वभोगसदृशान्दायादान्कारयेन्नृपः ॥ ५७ ॥ राज्यविभजनाच्छ्रेयो न भूपानां भवेत्खलु । अल्पीकृतं विभागेन राज्यं शत्रुर्जिघृक्षति ॥ ॥ ५८ ॥ नयेत्कालं वृथा नैव सदा स्त्रीमद्यसेवनैः ॥ यत्काले ह्युचितं कर्तुं तत्कार्यं द्रागशङ्कितम् ॥ ५९ ॥ क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् । निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ ६० ॥ विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः । संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥ ६१ ॥ उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वन् लघून्वर्धयन्नत्युच्चान्नमयन्नता

न्समुदयन्विश्लेषयन्संहतान् । क्रूरान्कण्टकिनो बहिर्नि रसयन्म्लानान्पुनः सेचयन्मालाकार इव प्रपञ्चचतुरो राजा चिरं नन्दति ॥ ६२ ॥ नृपाणां च नराणां च केवलं तुल्यमूर्तिता । आधिक्यं तु क्षमा धैर्यमाज्ञा दानं पराक्रमः ॥ ६३ ॥ प्रजां न रक्षयेद्यस्तु राजा रक्षादिभिर्गुणैः । अजागलस्तनस्येवतस्यजन्मनिरर्थकम् ॥ ॥ ६४ ॥ अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः । तस्यैका जायते तृप्तिर्द्वितीया न कथंचन ॥ ६५ ॥ प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥ ६६ ॥ प्रकृतिः स्वामिनं त्यक्त्वा समृद्धाऽपि न जीवति । अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ ६७ ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । न हि दुर्बलदग्धानां काले किंचित्प्ररोहति ॥ ६८ ॥ मा तात साहसं कार्षी र्विभवैर्गर्वमागतः । स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ॥ ६९ ॥ यानि मिथ्याऽभिभूतानां पतन्त्यश्रूणि रोदताम् । तानि संतापकान्घ्नन्ति सपुत्रपशुबा-

न्धवान् ॥ ७० ॥ कितवा यं प्रशंसन्ति यं प्रशंसन्ति
चारणाः । यं प्रशंसन्ति बन्धक्यः स पार्थ पुरुषाधमः
॥ ७१ ॥ राजानो यं प्रशंसन्ति यं प्रशंसन्ति वै द्विजाः
साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥ ७२ ॥
किं भक्तेनासमर्थेन किं शक्तेनापकारिणा । भक्तं शक्तं
च मां राजन्नावज्ञातुं त्वमर्हसि ॥ ७३ ॥ जनं जनपदा
नित्यमर्चयन्ति नृपार्चितम् । नृपेणावमतो यस्तु स स-
र्वैरवमन्यते ॥ ७४ ॥ अतिव्ययोऽनवेक्षा च तथाऽर्जनम
धर्मतः । मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ ७५॥
क्षिप्रमायमनालोच्य व्ययानश्च स्ववाञ्छया । परिक्षी-
यत एवासौ धनी वैश्रवणोपमः ॥ ७६ ॥ अप्राप्तकालं
वचनं बृहस्पतिरपि ब्रुवन् ॥ प्राप्नुयाद्बुद्ध्यवज्ञानमपमा-
नं च शाश्वतम् ॥ ७७ ॥ एकं हन्यान्न वा हन्यादिषु-
र्मुक्तोधनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं स-
नायकम् ॥ ७८ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च प-
त्तिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम्
॥ ७९ ॥ दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः ।

राज्यमेकश्चकारोच्चैः सुमन्त्री चंद्रगुप्तकः ॥ ८० ॥ अ-
शृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथा
स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ ८१ ॥ सभा वा
न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वा
पि नरो भवति किल्बिषी ॥ ८२ ॥ तस्मात्सभ्यः
सभां गत्वा रागद्वेषविवर्जितः । वचस्तथाविधं ब्रूयाद्यथा
न नरकं व्रजेत् ॥ ८३ ॥ निर्विशेषो यदा राजा समं भृ-
त्येषु तिष्ठति ॥ तत्रोद्यमसमर्थानामुत्साहः परिहीयते
॥ ८४ ॥ प्रसादो निष्फलो यस्य यस्य क्रोधो निरर्थकः ।
न तं राजानमिच्छन्ति पण्ढं पतिमिवाङ्गनाः ॥ ८५ ॥
चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः । पश्य
चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः ॥ ८६ ॥
अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् । न हि
सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ ८७ ॥ अरा-
वप्युचितं कार्यमातिथ्यं गृहमागते । छेत्तुमप्यागते
छायां नोपसंहरते द्रुमः ॥ ८८ ॥ असत्प्रलापः पारुष्यं
पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नैव

चिन्तयेत् ॥ ८९ ॥ प्राज्ञे नियुज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ ९० ॥ भोगस्य भाजनं राजा न राजा कार्यभाजनम् । राजकार्यपरिध्वंसान्मन्त्री दोषेण लिप्यते ॥ ९१ ॥ हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययः सदा । नित्यं भृत्यानपेक्षा च तस्य स्याद्धनदा धरा ॥ ९२ ॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः । एभिर्मुक्तो महिपालः प्राप्नोति खलु वाच्यताम् ॥ ९३ ॥ आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः । भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ ९४ ॥ कृतकृतस्य भृत्यस्य कृतं नैव प्रणाशयेत् । फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ ९५ ॥ ये च मादृग्दुरात्मानो दुराराध्या महीभुजः । प्रमादालस्यजाड्यानिख्यापितानि निजानि तैः ॥ ९६ ॥ सर्पान्व्याघ्रान्गजान्सिंहान्दृष्टोपायैर्वशीकृतान् । राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ ९७ ॥ सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ९८ ॥ संमतोऽहं प्रभोर्नित्य-

मितिमत्वा व्यतिक्रमेत् । कृच्छ्रेष्वपि न मर्यादां स भवे-द्राजवल्लभः ॥ ९९ ॥ अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते । अपि संमानहीनोऽपि स सर्वत्रापि पूज्यते ॥ १०० ॥ कलातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः । कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ १०१॥ प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् । पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ १०२ ॥ मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् । भवे-त्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ १०३ ॥ कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा । संभवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ १०४ ॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ॥ पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ १०५ ॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् । देवानां च विनश्येत स द्रुतं सुम-हानपि ॥ १०६ ॥ अभिभूतोऽप्यवज्ञातो यो राज्ञां द्वारि तिष्ठति । स तु राज्ञां श्रियं भुङ्क्ते नाभिमानी कदाचन ॥ १०७ ॥ रुष्टोऽपि राजा सद्भक्तस्तुष्टो वर्णितः ।

अतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण सः ॥ १०८ ॥ सर्वे यत्र विनेतारः सर्वे यत्राभिमानिनः । सर्वे महत्त्वमिच्छन्ति कुलं तदवसीदति ॥ १०९ ॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मास्मसेविष्ठाः । सचिवजितं षण्ढजितं युवतिजितं चैव राजानम् ॥ ११० ॥ आसन्नमेव नृपतिर्भजते मनुष्यं विद्याविहीनमकुलीनमसङ्गतं वा । प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति ॥ १११ ॥ अविद्वानपि भूपालो विद्यावृद्धोपसेवया । परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ ११२ ॥ गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ११३ ॥ सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः॥ ११४॥ यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ ११५ ॥ यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् । लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ ११६ ॥ सर्वो दण्ड-

जितो लोको दुर्लभो हि शुचिर्नरः । दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ ११७ ॥ पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥ ११८ ॥ गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य कार्यं भवति शासनम् ॥ ११९ ॥ कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः । तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥ १२० ॥ दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥१२१ समीक्ष्य सधृतः सम्यक् सर्वा रञ्जयति प्रजाः । असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ १२२ ॥ दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः । सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ १२३ ॥ अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥ १२४ ॥ तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः । तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः ॥ १२५ ॥ कश्चिदग्निभयाच्चैव सर्वं व्यालभयात्तथा ।

रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥ १२६ ॥ कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान् । पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥ १२७ ॥ कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमीयुषाम् । व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ १२८ ॥ कच्चित्कोशश्च कोष्ठं च वाहनं द्वारमायुधम् । आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥ १२९ ॥ कच्चिज्ज्ञातीन्गुरून्वृद्धान्वणिजः शिल्पिनः श्रितान् । अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ॥ १३० ॥ कच्चिच्चायव्यये युक्ताः सर्वे गणकलेखकाः । निवेदयन्ति पूर्वाह्णे नित्यमायं व्ययं तव ॥ १३१ ॥ षडनर्था महाराज कच्चित्ते पृष्ठतः कृताः । निद्राऽऽलस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता ॥ १३२ ॥ कच्चिच्छृणोषि साधूनां धर्मार्थसहिता गिरः । नित्यं शास्त्रविदां तात यथा धर्मार्थदर्शिनाम् ॥ १३३ ॥ निग्रहेण हि पापानां साधूनां संग्रहेण च । द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ १३४ ॥ यः क्षिप्तो

१ धर्म्यस्थानम् ।

मर्षयत्यार्त्तैस्तेन स्वर्गे महीयते । यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥ १२५ ॥ प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः । अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥ १२६ ॥ यदधीते यद्यजते यद्ददाति यदर्चति । तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥ १२७ ॥ रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन् । यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ १२८ ॥

## संकीर्णप्रकरणम् ३२

युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः । रवेरविषयं वस्तु किं न दीपः प्रकाशते ॥ १ ॥ ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति[1] । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ २ ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ३ ॥ मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च । द्विषतां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ४ ॥ पठतो

१ आगच्छति. २ वृद्धे.

नास्ति मूर्खत्वं जपतो नास्ति पातकम् । मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ ५ ॥ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः । न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥ ६ ॥ नोदन्वानर्थितामेति सदाऽम्भोभिः प्रपूर्यते । आत्मा तु पात्रतां नेयः पात्रमायन्ति संपदः ॥ ७ ॥ काकतालीययोगेन यदनात्मवति क्षणम् । करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीत्वचापलम् ॥ ८ ॥ धनमस्तीति वाणिज्यं किंचिदस्तीति कर्षणम् । सेवा न किंचिदस्तीति भिक्षा नैव च नैव च ॥ ९ ॥ वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् । वृथा दानं समर्थस्य वृथा दीपो दिवाऽपि च ॥ १० ॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ ११ ॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ १२ ॥ यन्निमित्तं भवेच्छोको दुःखं वा त्रास एव च । आयासो वा यतः शूलस्तदेकाङ्गमपि त्यजेत् ॥ १३ ॥ त्यजेदेकं कुलस्यार्थे ग्राम-

स्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥ १४ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ॥ १५ ॥ सर्वथा संत्यजेद्वादं न कंचिन्मर्मणि स्पृशेत् । सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः ॥ १६ ॥ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् । कर्मणा फलमस्तीति मनसा त्रितयं चरेत् ॥ १७ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥ १८ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम् । विदुरोक्तमकृत्वाऽभूत्कौरवः शोकशल्यभाक् ॥ १९ ॥ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथंचन । पुत्रार्पितप्रभुत्वोऽभूद्धृतराष्ट्रस्तृणोपमः ॥ २० ॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लुतान् । वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ २१ ॥ दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते । भिन्नश्लिष्टा तु या प्रीतिः सा दुःखैकप्रदायिनी ॥२२॥ यस्मिन्देशे न संमानो न प्रीतिर्न च बान्धवाः । न च विद्यागमोऽप्यस्ति न तत्र दिवसं

वसेत् ॥ २३ ॥ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ २४ ॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ २५ ॥ शनैः पन्थाः शनैः कन्था शनैः पर्वतमस्तके । शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ २६ ॥ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ २७ ॥ अनालोच्य व्ययं कर्ता ह्यनाथकलहप्रियः । आतुरः सर्वकार्येषु नरो दुःखैर्नियुज्यते ॥ ॥ २८ ॥ दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते । शुचिर्दक्षोऽनुरक्तश्चनूनं भृत्योऽपि दुर्लभः ॥ २९ ॥ मातृपितृगुरुस्वामिभ्रातृपुत्रसखिष्वपि । न विरुध्येन्नापकुर्यान्मनसाऽपि क्षणं क्वचित् ॥ ३० ॥ स्वजनैर्न विरुध्येत न स्पर्धेत बलीयसा । न कुर्यात्स्त्रीबालवृद्ध मूर्खेषु च विवादनम् ॥ ३१ ॥ अभियुक्तं बलवता दुर्बलं हीनसाधनम् । हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ ३२ ॥ अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति

नाश्वसेत् । दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति दूरतः ॥ ३३ ॥ ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता लोके कृतघ्ने नास्ति निष्कृतिः ॥ ३४ ॥ लुब्धमर्थेन गृह्णीयात्क्रुद्धमञ्जलिकर्मणा । मूर्खं छन्दानुवृत्त्या च तत्त्वार्थेन च पण्डितम् ॥ ३५ ॥ जानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे । आपत्कालेषु मित्राणि भार्यां च विभवक्षये ॥ ३६ ॥ पिपीलिकाऽर्जितं धान्यं मक्षिका संचितं मधु । लुब्धेन संचितं द्रव्यं समूलं च विनश्यति ॥ ३७ ॥ द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन । यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः॥३८॥ शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो । उभयोर्दुःखदायित्वे को भेदः शत्रुमित्रयोः ॥ ३९ ॥ पञ्चभिः कामिता कुन्ती तद्वधूरथपञ्चभिः । सतीं वदति लोकोऽयं यशः पुण्यैरवाप्यते ॥ ४० ॥ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ ४१ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया । श्रियोऽनुकूलदानेन लज्जया च कुलाङ्-

नाः ॥ ४२ ॥ नवे वयसि यः शान्तः स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥ ४३ ॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः॥४४॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ ४५ ॥ संपत्सरस्वती सत्यं सन्तानं सदनुग्रहः । सत्ता सुकृतसम्भारःसकाराः सप्त दुर्लभाः ॥ ४६ ॥ चत्वारो धनदायादा धर्माग्निनृपतस्कराः । तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥ ४७ ॥ सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झिताः । तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥ ४८ ॥ एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् । गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ४९ ॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे । अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ ५० ॥ यस्मिन् रुष्टे भयं नास्ति तुष्टे नैव धनागमः । निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति॥५१ आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः । ब्रह्मज्ञानफलं

विद्या दत्तभुक्तफलं धनम् ॥५२॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो न हि सर्वत्र चन्दनं न वने वने ॥ ५३ ॥ संभ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् । विनयो वंशमाख्याति देशमाख्याति भाषितम् ॥ ५४ ॥ अतिथिर्बालकः पत्नी जननी जनकस्तथा । पञ्चैते गृहिणा पोष्या इतरे च स्वशक्तितः ॥ ५५ ॥ दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता । अभ्यासेन न लभ्येयुश्चत्वारः सहजा गुणाः ॥ ५६ ॥ लोभमूलानि पापानि रसमूलानि व्याधयः । स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखीभव ॥ ५७ ॥ प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ ५८ ॥ विषस्य विषयाणां च दृश्यते महदन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ ५९ ॥ पुराणान्ते श्मशानान्ते भोजनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ ६० ॥ पण्डितैः सह सांगत्यं पण्डितैः सह संकथाः । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ ६१ ॥ तुष्यन्ति

भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसंतोषैः खलाः परविपत्तिषु ॥ ६२ ॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च । आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ ६३ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । द्वावपि सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥६४॥ यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ६५ ॥ वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत् । स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥ ६६ ॥ पादेन क्रम्यते पन्था मानहीनं च भोजनम् । अविवेकिप्रभोः सेवा पातकं किमतः परम् ॥ ६७ ॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ ६८ ॥ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥ ६९ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वन्हिर्नास्ति ज्ञानात्परं सुखम् ॥ ७० ॥ कृतस्य करणं नास्ति मृतस्य मरणं तथा ।

गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ ७१ ॥ ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते दुःखभागिनः ॥ ७२ ॥ अव्यवस्थितचित्तस्य न जने न वने सुखम् । जनो दहति सङ्गेन वने सङ्गविवर्जितः ॥ ७३ ॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम् ॥ ७४ ॥ लालयेत्पञ्च वर्षाणि दशवर्षाणि ताडयेत् । प्राप्ते षोडशके वर्षे पुत्रं मित्रवदाचरेत् ॥ ७५ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारबन्धनः । धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ ७६ ॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि । अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ७७ ॥ अग्निहोत्रं गृहं क्षेत्रं मित्रं भार्यां सुतं शिशुम् । रिक्तपाणिर्नपश्येत राजानं ब्राह्मणं गुरुम् ॥ ७८ ॥ अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते । अनाश्रया न तिष्ठन्ति पण्डिता वनिता लताः ॥ ७९ ॥ प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा । दृष्ट्वैवोन्मादयत्येका पिताचान्याऽतिसंचयात्

॥ ८० ॥ संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने । त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ ८१ ॥ लालने बहवो दोषास्ताडने बहवो गुणाः । तस्मात्पुत्रं च शिष्यं च ताडयेन्नतुलालयेत् ॥ ८२ ॥ अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् । यच्च बाहुबलं भीरो-र्व्यर्थमेतत्त्रयं भुवि ॥ ८३ ॥ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः । बुद्धिप्रारब्धकार्यस्य नास्ति किंचन दुष्करम् ॥ ८४ ॥ आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ८५ ॥ किं तु मे स्यादिदं कृत्वा । किं तु मे स्यादकुर्वतः । इति संचिन्त्य मनसा प्राज्ञःकुर्वीत वा नवा ॥८६॥ देहे पातिनि का रक्षा यशो रक्ष्यमपातवत् । नरः पतितकायोऽपि यशःकायेन जीवति ॥ ८७ ॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति । तस्माद्देहेष्वनित्येषु कीर्तिमेकामुपार्जय ॥ ८८ ॥ मनसा चिन्तितं कार्यं वचसा न प्रकाशयेत् । अन्यलक्षितकार्यस्य यतः सिद्धिर्नजायते ॥ ८९ ॥ अस्ति पुत्रो वशे यस्य भृत्यो

भार्या तथैवच । अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥ ९० ॥ माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी । अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥ ९१ ॥ अदाता वंशदोषेण कर्मदोषाद्दरिद्रता । उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ९२ ॥ कुलीनैः सह संपर्कं पण्डितैः सह मित्रताम् । ज्ञातिभिश्च समं मेलं कुर्वाणो नावसीदति ॥ ९३ ॥ यो ध्रुवाणि परित्यज्य अध्रुवं परिसेवते । ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेवच ॥ ९४ ॥ असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जाश्च कुलाङ्गनाः ॥ ९५ ॥ पुस्तकस्था तु या विद्या परहस्तगतं धनम् । कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ९६ ॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् । तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥ ९७ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ९८ ॥ षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता । निद्रा तन्द्रा भयं क्रोध आल-

नयपण्डितैः । तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ११८ ॥ वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥ ॥ ११९ ॥ विश्वासप्रतिपन्नानां वञ्चने का विदग्धता । अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम् ॥ १२० ॥ अचला कमला कस्य कस्य मित्रं महीपतिः । शरीरं च स्थिरं कस्य कस्य वश्या वराङ्गना ॥१२१॥ यदपथ्यवतामायुर्यदनीतिमतां श्रियः । तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ॥ १२२ ॥ रागे द्वेषे च माने च द्रोहे पापे च कर्मणि । अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ १२३ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ १२४ ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः ॥ ॥ १२५ ॥ अन्यायोपार्जितं द्रव्यं दशवर्षाणि तिष्ठति । प्राप्तेचैकादशे वर्षे समूलं च विनश्यति ॥ १२६ ॥ दानेन भोगी भवति मेधावी वृद्धसेवया । अहिंसया च

दीर्घायुरिति प्राहुर्मनीषिणः ॥ १२७ ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोकमाचरेत् ॥ १२८ ॥ यं मातापितरौ क्लेशं सहेते संभवे नृणाम् । न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ १२९ ॥ पित्रोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ १३० ॥ सर्वेषामेव शौचानामर्थं शौचं परं स्मृतम् । योऽर्थे शुचिः सहि शुचिन मृद्वारिशुचिः शुचिः ॥ १३१ ॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधर्मैः सह । पयोपि शौण्डिकीहस्ते मदिरां मन्यते जनः ॥ १३२ ॥ नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥१३३॥ मनसैव कृतं पापं न शरीरकृतं कृतम् । येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ १३४ ॥ मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः । नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥ १३५॥ गुणो भूषयते रूपं शीलं भूषयते कुलम् । सिद्धिर्भूषयते विद्यां भोगो

भूषयते धनम् ॥ १३६ ॥ यस्य न ज्ञायते शीलं कुलं
विद्या नरस्य च । कस्तेन सह विश्वासं पुमान्कुर्याद्विच-
क्षणः ॥ १३७ ॥ संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति
स्फुटम् । दग्धस्यागुरुखण्डस्य स्फारीभवति सौरभम्
॥ १३८ ॥ उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥१३९॥
व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत् । काषाय
रसमास्वाद्य स्वाद्वतीवाम्बु विन्दते ॥ १४० ॥ गुणाना-
मन्तरं प्रायस्तज्ज्ञो जानाति नेतरः । मालती मल्लि-
कामोदं घ्राणं वेत्ति न लोचनम् ॥ १४१ ॥ असम्भ-
वगुणस्तुत्या जायते स्वात्मनस्त्रपा । कर्णिकारं सुग-
न्धीति वदन्को नोपहस्यते ॥ १४२ ॥ रोगशोकपरी-
तापबन्धनव्यसनानि च । आत्मापराधवृक्षाणां फला-
न्येतानि देहिनाम् ॥ १४३ ॥ पवित्रं वृष्यमायुष्यं
श्रमस्वेदमलापहम् । शरीरबलसन्धानं स्नानमोजस्करं
परम् ॥ १४४ ॥ शारीराज्जायते व्याधिर्मानसो नात्र
संशयः । मानसाज्जायते चापि शारीर इति निश्चयः

॥ १४५ ॥ लाघवं कर्म सामर्थ्यं स्थैर्यं क्लेशसहिष्णुता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ॥ १४६ ॥ न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि । गृह्णंश्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥ १४७ ॥ जनिता चोपनेता च यश्च विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ १४८ ॥ राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च । पत्नी माता स्वमाता च पञ्चैता मातरः स्मृताः ॥ १४९ ॥ वरं शरावहस्तस्य चाण्डालागारवीथिषु । भिक्षाया अटनं राम न मौर्ख्यहतजीवितम् ॥ १५० ॥ न स्त्रीजितः प्रमूढः स्याद्राढरागवशीकृतः । पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥ १५१ ॥ यो हि न कुरुते पापं सर्वभूतेषु कर्हिचित् । कर्मणा मनसा वाचा स ज्ञानी कथ्यते बुधैः ॥ १५२ ॥ मातरं पितरं पुत्रं दारानतिथिसोदरान् । हित्वा गृही न भुञ्जीयादेकाकी तु कदाचन ॥ १५३ ॥ विद्यार्थे ब्रह्मचारी स्यात्सर्वेषां पालने गृही। ताभ्यां विना न शोभेते गृहस्थब्रह्मचारिणौ ॥ १५४ ॥

पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही । एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ १५५ ॥ युक्तियुक्तमुपादेयं वचनं बालकादपि । अन्यत्तृणमिव त्याज्यमप्युक्तं परमेष्ठिना ॥ १५६ ॥ त्यज दुर्जनसंसर्गं भज साधुसमागमम् । कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ १५७ ॥ अतिक्लेशेन ये ह्यर्था धर्मस्यातिक्रमेण च । शत्रूणां प्रणिपातेन ते ह्यर्था मा भवन्तु मे ॥ १५८ ॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥ १५९ ॥ परपत्नी तु या स्त्री स्यादसंबन्धा च योनितः । तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥ १६० ॥ उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ १६१ ॥ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ता स्मृताः ॥ १६२ ॥ आत्मानं विन्दते यस्तु सर्वभूतगुहाशयम् । श्लोकेन यदि वाऽर्द्धेन क्षीणं तस्य प्रयोजनम् ॥ १६३ ॥ यस्येदं जन्मपाश्चात्यं

त्तमाश्चैव महामते । विशन्ति विमलां विद्यां मुक्ता वेणुमिवोत्तमम् ॥ १६४ ॥ अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत्पराभवम् । एष एव सतां धर्मो विपरीतमतोऽन्यथा ॥ १६५ ॥ ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि । धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ १६६ ॥ काले मृदुर्यो भवति काले भवति दारुणः । स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ १६७ ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि । तृणाग्रेण सुसंस्पृष्टः प्राप्तकालो न जीवति ॥ १६८ ॥ न मन्त्रा न तपो दानं न मित्राणि न बान्धवाः । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ १६९ ॥ बहुभिर्न विरोद्धव्यं दुर्जनैः सुजनैरपि । स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥ १७० ॥ दाने तपसि शौर्ये च यस्य न प्रथितं मनः । विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ १७१ ॥ स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते । स्वयं भ्रमति संसारे स्वयं मोक्षं च गच्छति ॥ १७२ ॥ यथैवात्मा तथा पुत्रः पुत्रेण

दुहिता समा । तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ १७३ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारवर्द्धनः । धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ १७४ ॥ क्रोधस्य कालकूटस्य विद्यते महदन्तरम् । स्वाश्रयं दहति क्रोधः कालकूटो न चाश्रयम् ॥ १७५ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । देहिनां गुणदोषाः स्युर्मित्राणि रिपवस्तथा ॥१७६॥ अर्थिप्रश्नकृतौ लोके सुलभौ तौ गृहे गृहे । दाता चोत्तरदश्चैव दुर्लभौ पुरुषौ भुवि ॥ १७७ ॥ उपदेशो न दातव्यो यादृशे तादृशे नरे । चटिका कपिमूर्खेण सगृहा निर्गृहा कृता ॥ १७८ ॥ बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १७९ ॥ न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः । वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥ १८० ॥ अपूज्यपूजनाच्चैव पूज्यानां चाप्यपूजनात् । नृघातकसमं पापं शश्वत्प्राप्नोति मानवः ॥ १८१ ॥ श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ।

वेदस्याध्ययनं हीदं तच्च कार्यं महत्स्मृतम् ॥ १८२ ॥ प्रियं वा यदि वा द्वेष्यं शुभं वा यदि वाऽशुभम् । अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ १८३ ॥ मनसाऽपि हि भूतानां योऽनिष्टानि प्रचिन्तयेत् । भवन्ति तस्य तान्येव लोकेऽस्मिन्नात्र संशयः ॥ १८४ ॥ प्राप्य चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् । न वेत्त्यात्महितं यस्तु स भवेदात्मघातकः ॥ १८५ ॥ श्रद्दधानः शुभां विद्यामाददी तावरादपि । अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ १८६ ॥ आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यः परिकीर्त्यते ॥ १८७ ॥ मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम् । दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु ॥ १८८ ॥ सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा । शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः ॥ १८९ ॥ हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः । पश्यन् रोगान् बहून् कष्टान् बुद्धिमान्विषमाशनात् ॥ १९० ॥ जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव

पङ्केन न स पापेन लिप्यते ॥ १९१ ॥ भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् । शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ १९२ ॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसेत् ॥ १९३ ॥ साक्षरं पुरुषं दृष्ट्वा यो नरो नाभिमन्यते । बलीवर्दसमो लोके खुरशृङ्ग विवर्जितः ॥ १९४ ॥ उपभोक्तुं न जानाति श्रियं प्राप्यापि मानवः । आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ॥ १९५ ॥ गाढं गुणवती विद्या न मुदे विनयं विना । मूर्खताऽपि मुदे भूयान्महत्सु विनयान्विता ॥ १९६ ॥ मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः । भवन्ति तं विना नैव . . ॰थाऽङ्क बिन्दवः ॥ १९७ ॥ तावद्भयाद्भेतव्यं यावद्भयमनागतम् । आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ १९८ ॥ अकुलीन कुलीनश्च मर्यादां यो न लङ्घयेत् । धर्मापेक्षी मृदुर्दान्तः स कुलीनशतैर्वरः ॥ १९९ ॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥२००॥

पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः । न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः ॥ २०१ ॥ सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूत दयातीर्थं सर्वत्रार्जवमेव च ॥ २०२ ॥ दानं तीर्थं दमस्तीर्थं संतोषस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थश्च प्रियवादिता ॥ २०३ ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिः मनसः परा ॥ २०४ ॥ कारणात्प्रियतामेति द्वेष्यो भवति कारणात् । अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥ २०५ ॥ पुत्रैर्मित्रैर्गृहैर्वाऽपि वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे पुंसः श्रेयस्करी धृतिः ॥ २०६ ॥ अज्ञोऽपि तज्ज्ञतामेति शनैः शैलोऽपि चूर्ण्यते । घुणोऽप्यत्ति महावृक्षं पश्याभ्यासविजृम्भितम् ॥ २०७ ॥ मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः । उत्सृज्यैतद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ २०८ ॥ अक्षिपक्ष्म कदा लुप्तं छिद्यन्ते हि शिरोरुहाः । वर्धमानात्मनामेव भवन्ति हि विपत्तयः ॥ २०९ ॥ वेदः स्मृतिः

सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ २१० ॥ सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः । सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ २११ यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ २१२ ॥ यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ २१३ ॥ यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ २१४ ॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ २१५ ॥ विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम् ॥ २१६ ॥ न लोके राजते मूर्खः केवलात्मप्रशंसया । अपि चेह मृजा हीनः कृतविद्यः प्रकाशते ॥ २१७ ॥ योगृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः । न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥ २१८ ॥ यथा सुनिपुणः सम्यक्

परदोषेक्षणे रतः । तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥ २१९ ॥ तदेवास्य परं मित्रं यत्र संक्रामति द्वयम् । दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ ॥ २२० ॥ एकेनापि सुपुत्रेण सिंहि स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति रासभि ॥ २२१ ॥ किं जातैर्बहुभिः पुत्रैः शोकसंतापकारकैः । वरमेकः कुलाल-म्बी यत्र विश्राम्यते कुलम् ॥ २२२ ॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् ॥ मास्मसीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ २२३ ॥ परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥२२४ ॥ गोशतादपि गोक्षीरं प्रस्थं धान्यशतादपि ।प्रासादादपि खट्वार्धं शेषाः परविभूतयः॥२२५॥ मायां विना महाद्रव्यं द्राक्ष संपाद्यते जनैः । विना परस्वहरणान्न कश्चित्स्यान्महाधनः ॥ २२६ ॥ भक्तद्वेषो जडप्रीतिः सुरुचिर्गुरुलङ्घने । मुखे कटुकता नूनं धनिनां ज्वरिणामिव ॥ २२७ ॥ लोभाविष्टो नरो वित्तं वीक्षते न स चापदम् । दुग्धं पश्यति मार्जारो यथा न लगुडा

दिकम् ॥ २२८ ॥ न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ २२९ ॥ मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते । सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ न हि दृष्टपूर्वा ॥ २३० ॥ ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीडितेन। प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥ २३१ ॥ भूमिपतावर्थपतौ बाले वृद्धे तपोनिधौ विदुषि । योषिति मूर्खे गुरुषु च विदुषा नैवोत्तरं देयम् ॥ २३२ ॥ अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति । मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥२३३॥ वैद्यस्तर्कविहीनो निर्लज्जा कुलवधूर्यतिर्मूर्खः । कटके च प्राहुणिको मरणकशूलानि चत्वारि ॥ २३४ ॥ त्यजति भयमकृतपापं सुमित्रमयशः प्रमादिनं विद्या । ह्रीः कामिनमलसं श्रीः क्रूरं स्त्री दुर्जनं लोकः ॥ २३५ ॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु । स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखीभवति

॥ २३६ ॥ अबला यत्र प्रबला बालो राजा निरक्षरो मन्त्री । न हि न हि तत्र धनाशा जीवित आशाऽपि दुर्लभा भवति ॥ २३७ ॥ आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भाति । विनये वंशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुंसि ॥ २३८ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म । स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ २३९ ॥ विरला जानन्ति गुणान्विरलाः कुर्वन्ति निर्धने स्नेहम् । विरलाः परकार्यरताः परदुःखेनापि दुःखिता विरलाः ॥ २४० ॥ रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ २४१ ॥ अनुचितकर्मारम्भः स्वजनविरोधो बलीयसा स्पर्धा । दुष्टस्त्रीविश्वासो ह्यापद्द्वाराणि चत्वारि ॥ २४२ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्यसन्धं भगवति वसुधे कथं वहसि ॥ २४३ ॥ रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ २४४ ॥ यद्यपि का नो

हानिः परकीयां चरति रासभो द्राक्षाम् । असमञ्जसमिति मत्वा तथापि संखिद्यते चेतः ॥ २४५ ॥ अधनं खलु जीवधनं हेमार्द्धधनं महाधनं धान्यम् । अतिधनमेतत्त्रितयं विद्या शीलं च मित्रं च ॥ २४६ ॥ बलोपपन्नोऽपि हि बुद्धिमान्नरः परं नयेन स्वयमेव वैरिताम् । भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणात्कोऽपि विचक्षणो विषम् ॥ २४७ ॥ कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम् । परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः ॥ २४८ ॥ देशाटनं राजसभाप्रवेशो व्यापारिविद्धज्जनसंगतिश्च । सर्वेषु शास्त्रेष्ववलोकनं च चातुर्यमूलानि भवन्ति पञ्च ॥२४९॥ शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धिभावम् । सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते ॥ २५० ॥ दानं दरिद्रस्य प्रभोश्च शान्तिर्यूनां तपो ज्ञानवतां च मौनम् । इच्छानिवृत्तिश्च सुखान्वितानां दया च भूतेषु दिवं नयन्ति ॥ २५१ ॥ अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवा-

दिनी च । वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन् ॥ २५२ ॥ आरोग्यमानृण्यमविप्रवासः सप्रत्ययावृत्तिरभीतवासः । सद्भिर्मनुष्यैः सह संप्रयोगः षड् जीवलोकस्य सुखानि राजन् ॥ २५३ ॥ अन्यायवित्तेन कृतोऽपि धर्मः सव्याज इत्याहुरशेषलोकाः । न्यायार्जितार्थेन स एव धर्मो निर्व्याज इत्यार्यजना वदन्ति ॥ २५४ ॥ प्रभुर्विवेकी धनवांश्च दाता विद्वान्विरागी प्रमदा सुशीला । तुरङ्गमः शस्त्रनिपातधीरो भूमण्डलस्याभरणानिपञ्च ॥ २५५ ॥ यती व्रती चापि पतिव्रता च वीराश्च शूराश्च दयापराश्च । त्यागी च भोगी च बहुश्रुताश्च सुसङ्गमात्रेण दहन्ति पापम् ॥ २५६ ॥ वनेऽपि दोषाः प्रभवन्तिरागिणां गृहेषु पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य,गृहं तपोवनम्॥२५७॥उदीरितोऽर्थः पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ २५८ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापता-

डनैः । तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ २५९ ॥ मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ २६० ॥ जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया । कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥ २६१ ॥ सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदाः ॥ २६२ ॥ शिशुरपि निपुणो गुरोर्गरीयान्न तु वपुषैव महान्महत्प्रतिष्ठः । मणिरणुरपि भूषणाय पुंसां न तु पृथुलेव शिला विलासहेतुः ॥ २६३ ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः संतापयन्ति कमपथ्यभुजं न रोगाः । कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः कं स्वीकृता न विषया ननु तापयन्ति ॥ २६४ ॥ अर्था हसन्त्युचितदानविहीनलुब्धं भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम् । जारा हसन्ति तनयानुपलालयन्तं मृत्युर्हसत्यवनिपं रणरङ्गभीरुम्

॥ २६५ ॥ बालसखित्वमकारणहास्यं स्त्रीषु विवाद असज्जनसेवा । गर्दभयानमसंस्कृतवाणी षट्सु नरो लघुतामुपयाति ॥ २६६ ॥ वाक्यं तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः । प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव भृत्यः॥२६७॥ मनीषिणः सन्ति न ते हितैषिणो हितैषिणः सन्ति न ते मनीषिणः । सुहृच्च विद्वानपि दुर्लभो नृणां यथौषधं स्वादु हितं च दुर्लभम् ॥ २६८ ॥ स्थितो न खादामि हसन्न जल्पे गतं न शोचामि कृतं न मन्ये । द्वयोस्तृतीयो न भवामि राजन् केनास्मि मूर्खो वद कारणेन ॥ २६९ ॥ जवो हि सप्तेः परमं विभूषणं त्रपाऽङ्गनायाः कृशता तपस्विनः । द्विजस्य विद्या नृपतेरपि क्षमा पराक्रमः शस्त्रबलोपजीविनाम् ॥ २७० ॥ तद्भोजनं यन्मुनिभुक्तशेषं स बुद्धिमान्यो न करोति पापम् । तत्सौहृदं यत्क्रियते परोक्षे दम्भैर्विना यः क्रियते स धर्मः ॥ २७१॥ स्वर्गच्युतानामिह जीवलोके चत्वारि चिन्हा-

---

१ अश्वस्य २ लज्जा

नि वसन्ति देहे । दानप्रसङ्गो मधुरा च वाणी देवार्चनं पण्डित तर्पणं च ॥ २७६ ॥ नातिलोभो विनीतश्च दयादानरुचिर्मृदुः । प्रसन्नवदनश्चैव मनुष्यादागतो नरः ॥ २७३ ॥ बह्वाशी नैव संतुष्टो मायावी च क्षुधाऽधिकः । स्वप्नमूढोऽलसश्चैव तिर्यग्योन्यागतो नरः ॥ २७४ ॥ विरोधिता बंधुजनेषु नित्यं सरोगता मूर्खजनेषु सङ्गः । अतीव रोषी कटुका च वाणि नरस्य चिन्हं नरकागतस्य ॥ २७५ ॥ इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमिः । क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥ २७६ ॥ गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात्॥२७७॥ वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥२७८॥ कान्ताकटाक्षविशिखा न लुनन्ति यस्य चित्तं न निर्दहति कोपकृशानुतापः । कर्षन्ति भूरिविषयाश्च न लोभपाशैर्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥२७९ ॥

यत्रापि तत्रापि गता भवन्ति हंसा महीमण्डल मण्डनाय । हानिस्तु तेषांहि सरोवराणां येषां मरालैः सह विप्रयोगः ॥ २८० ॥ दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ २८१ ॥ अनेकशास्त्रं बहुवेदितव्यमल्पश्च कालो बहवश्च विघ्नाः । यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ २८२ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥ २८३ ॥ यशस्करे कर्मणि मित्रसंग्रहे प्रियासु नारीष्वधनेषु बन्धुषु । क्रतौ विवाहे व्यसने रिपुक्षये धनव्ययस्तेषु न गण्यते बुधैः ॥ २८४ ॥ शस्त्रैर्हतास्तु रिपवो न हता भवन्ति प्रज्ञाहताश्च नितरां सुहता भवन्ति ॥ शस्त्रं निहन्ति पुरुषस्य शरीरमेकं प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ २८५ ॥ स्तब्धस्य नश्यति यशो विषमस्य मैत्री नष्टक्रियस्य कुलमर्थपरस्य धर्मः । विद्या-

फलं व्यसनिनः कृपणस्य सौख्यं राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २९६ ॥ न जारजातस्य ललाटशृङ्गं कुलप्रसूतस्य न पाणिपद्मम् । यदा यदा मुञ्चति वाक्यबाणं तदा तदा जातिकुलप्रमाणम् ॥ २८७ ॥ न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः । दत्वा न पश्चात्कुरुते हि तापं स कथ्यते सत्पुरुषार्यशीलः ॥ २८८ ॥ यच्चिन्तितं तदिह दूरतरं प्रयाति यन्मनसाऽपि न कृतं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी ॥ २८९ ॥ दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं तन्नाशाय प्रभवति ततोवाञ्छमानः स्वयं सः । तस्माद्देयो विमलमतिभिर्नावकाशोऽधमानां जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ २९० ॥ वृक्षं क्षीणफलं त्यजन्ति विहगा शुष्कं सरः सारसा निर्द्रव्यं पुरुषं त्यजंति गणिका भ्रष्टं नृपं मन्त्रिणः । पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः सर्वः कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभः ॥ २९१ ॥

लोभश्चेद्गुणेन किं पिशुनता यद्यस्ति किं पातकैः सत्यं चेत्तपासा च किं शुचिमनो यद्यस्ति तीर्थेन किम्। सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ २९२ ॥ पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्, रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः। अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ २९३ ॥शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने। दर्व्यग्रकरेण धूममलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥ २९४ ॥ एहि स्वागतमाविशासनमिदं कस्माच्चिराद्दृश्यसे का वार्ता परि दुर्बलोऽसि नितरां प्रीतोऽस्मि ते दर्शनात्। इत्येवं समुपागतं द्विजवरं संभावयन्त्यादरात्तेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥ २९५ ॥ को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगतिः का हानिः समयच्युु

तिर्निपुणता का धर्मतत्त्वे रतिः । कः शूरो विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धनं विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ २९६ ॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्याप्रदानं युवतिजनकथामूकभावः परेषाम् । तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ २९७ ॥ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य विनयो वित्तस्यपात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ २९८ ॥ सन्तः क्वापि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते विद्वांसोऽपि न सन्ति सन्ति यदिवा मात्सर्ययुक्ताश्च ते । राजानोऽपि न सन्ति सन्ति यदिवा लोभाद्धनग्राहिणो दातारोऽपि न सन्ति सन्ति यदिवा सेवाऽनुकूलाः क्षितौ ॥ २९९ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि क-

वयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयो रप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ३०० ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः । सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ३०१ ॥ धर्मे तत्परता मुखे मधुरता दाने समुत्साहता मित्रेऽवञ्चकता गुरौ विनयता चित्तेऽतिगम्भीरता । आचारे शुचिता गुणे रसिकता शास्त्रेषु विज्ञातृता रूपे सुन्दरता शिवे भजनता त्वय्यस्ति भो राघव ॥ ३०२ ॥ वरं मौनं कार्यं नच वचनमुक्तं यदनृतं वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिर्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ ३०३ ॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगृह्य स्वकं सत्त्वोत्साहवताऽपि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् । देवेन्द्रद्रुहिणोपमैर्बहुगुणैरभ्यर्चितो भ्रा-

तृभिः किं क्लिष्टः सुचिरं विराटभवने पूर्वं न धर्मात्मजः ॥ ३०४ ॥ किं चित्रं यदि राजनीतिकुशलो राजा भवेद्धार्मिकः किं चित्रं यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः । तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात्कचित् ॥ ३०५ ॥ सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम् । अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ ३०६ ॥

---

## संसारवर्णनम्. ३३

संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे । ज्ञानामृतरसास्वाद आलापः सज्जनैः सह ॥ १ ॥ यथा विन्ध्यवनस्थाने प्रस्फुरन्ति करेणवः । तथा तस्मिन्परे भूम्नि ब्रह्माण्डत्रसरेणवः ॥ २ ॥ यः सर्वविभोऽस्माकं धियां न विषयस्ततः । तज्जगत्कथने शक्तिर्न ममास्ति महा-

मते ॥ ३ ॥ देहवद्वटधानादौ सुविचार्य विलोक्यताम् । क्व धाना कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ॥ ४ ॥ एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् । पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति ॥ ५ ॥ क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितम् । क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुर्न जाने संसारः किममृतमयः किं विषमयः ॥ ॥ ६ ॥ कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः । नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ ७ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः

यते ॥ ८ ॥ इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च काम्याशनम् । रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः संत्रासोऽपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः ॥ ९ ॥

## लोकवासनानिन्दा. ३४

अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे । परापवादभीरूणां दूरतो यान्ति संपदः ॥ १ ॥ निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ । खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥ २ ॥ काकः पक्षिषु चाण्डालः स्मृतः पशुषु गर्दभः । नराणां कोऽपि चाण्डालः स्मृतः सर्वेषु निन्दकः ॥ ३ ॥ असंमाने तपोवृद्धिः संमानाच्च तपः क्षयः । पूजया पुण्यहानिः स्यान्निन्दया सद्गतिर्भवेत् ॥ ४ ॥ विद्यते न हि स कश्चिदुपायः सर्वलोकपरितोषकरो यः । सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥ ५ ॥ मनि-

न्दया यदि जनः परितोषमेति नन्वप्रयत्नसुलभोऽयमनुग्रहो मे । श्रेयोऽर्थिनोपि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ ६ ॥ न वेत्ति यो यस्य गुणप्रकर्षं स तं सदा निन्दति नात्र चित्रम् । यथा किराती करिकुम्भजातां मुक्तां परित्यज्य बिभर्ति गुञ्जाम् ॥ ७ ॥ वसन्त्यरण्येषु चरन्ति दूर्वाः पिबन्ति तोयान्यपरिग्रहाणि । तथापि बध्या हरिणा नराणां को लोकमाराधयितुं समर्थः ॥ ८ ॥ न लोकचित्तग्रहणे रतस्य न भोजनाच्छादनतत्परस्य । न शब्दशास्त्राभिरतस्य मोक्षो न चातिरम्यावसथप्रियस्य ॥ ९ ॥ निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ १० ॥ जीवन्तु मे शत्रुगणाः सदैव येषां प्रसादात्सुविचक्षणोऽहम् । यदा यदा मे विकृतिं भजन्ते तदा तदा मां प्रतिबोधयन्ति ॥ ११ ॥ जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं शूरे निर्घृणता मुनौ विमतिता

दैन्यं प्रियालापिनि । तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ॥ १२ ॥ प्रायेणात्रकुशान्वितं कुकुलजाः श्रीवल्लभां दुर्भगाः दातारं कृपणा ऋजूननृजवो वित्तान्वितं निर्धनाः । वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खा जनाः ॥ १३ ॥ सूक्तिं कर्णसुधां वपनकु सुजनस्तस्मिन्न मोदामहे ब्रूतां वाचमसूयको विषमुचं तस्मिन्न खिद्यामहे । या यस्य प्रकृतिः स तां वितनुतां किं नस्तया चिन्तया कुर्मस्तत्खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ १४ ॥

---

## वैराग्यप्रकरणम्. ३९

जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किंचिदासाद्य देही प्राणान्विमुञ्चति ॥ १ ॥ एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः । स्वप्न एष महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ २ ॥ एकोऽद्य प्रातरपरे

पश्चादन्ये पुनः परे । सर्वे निःसीम्नि संसारे यान्ति कः केन शोच्यते ॥ ३ ॥ येषां निमेषोन्मेषाभ्यां जगतां प्रलयोदयौ । तादृशाः पुरुषाः सन्ति मादृशां गणनैव का ॥ ४ ॥ कोटयो ब्रह्मणां याता गताः सर्गपरम्पराः । प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीवने ॥ ५ ॥ येषु येषु दृढं बद्धा भावना दृढवस्तुषु । तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥ ६ ॥ नीलोत्पलाभनयनाः परमप्रेमभूषणम् । हासायैव विलासिन्यः क्षणभङ्गितया स्थिताः ॥ ७ ॥ गतेनापि न संबन्धो न सुखेन भविष्यता । वर्तमानं क्षणातीतं संगतिः कस्य केन वा ॥ ८ ॥ पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते । सुशोषं सागरजलं शरीरे तत्र का कथा ॥ ९ ॥ लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया । न सन्ति खलु तावन्त्यो गङ्गायामपि वालुकाः ॥ १० ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ११ ॥ मातृपितृसहस्राणि पुत्रदारशतानि च । तवानन्तानि यातानि

कस्य ते कस्य वा भवान् ॥ १२ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १३ ॥ जन्मैव व्यर्थतां नीतं भवभोगप्रलोभिना । काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥ १४ ॥ मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ १५ ॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १६ ॥ स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि । आहारोऽपि न रोचेत किमुतान्या विभूतया ॥ १७ ॥ विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः । अपहर्तुं समर्थोऽसौ रविरेव निशातमः ॥ १८ ॥ पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः । सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ १९ ॥ मितमायुर्वयो नित्यं नैति यातं कदाचन । परामृशन्ति तदपि न भवं भोगलोलुपाः ॥ २० ॥ निःस्नेहो याति निर्वाणं स्नेहोऽनर्थस्य कारणम् । निःस्नेहेन प्रदीपेन यदेतत्प्रकटीकृतम् ॥ २१ ॥

अश्नीमहि वयं भिक्षामाशावासो वसीमही । शयीमहि मही पृष्ठे कुर्वीमहि किमीश्वरैः ॥ २२ ॥ यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्यनिखन्यन्ते हृदये शोकशङ्कवः ॥ २३ ॥ प्रचण्डवासनावातैरुद्धुता नौर्मनोमयी । वैराग्यकर्णधारेण विना रोद्धुं न शक्यते ॥ २४ ॥ रागिण्यपि विरागिण्यः स्त्रियस्तासु रमेत कः । अहं तु कलये मुक्तिं या विरागिणि रागिणी ॥ २५ ॥ पूरयित्वाऽर्थिनामाशां प्रियं कृत्वा द्विपामपि । पारं गत्वा श्रुतीनस्य धन्या वनमुपासते ॥ २६ ॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः । यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ २७ ॥ निर्विवेकतया बाल्यं कामोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥ २८ ॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृप्ताः कामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥ २९ ॥ गतसारेऽत्रसंसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तनविभ्रमः ॥ ३० ॥ दिनमेकं शशी पूर्णः क्षीणस्तु

बहुवसिरान् । सुखाद्दुःखं सुराणामप्यधिकं का कथा नृणाम् ॥ ३१ ॥ यस्मातः संस्कृतं चान्नं सार्यं सद्यो विनश्यति । तदीयरसनिष्पन्ने काये का नाम नित्यता ॥ ३२ ॥ सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ३३ ॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । वैराग्यकारणं तस्य किमन्यदुपदिश्यते ॥ ३४ ॥ मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ । देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥ ३५ ॥ स्थानाद्बीजादुपष्टम्भान्निष्पदान्निधनादपि । कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥ ३६ ॥ लोहदारुमयैः पाशैर्बद्धोनैव पुमान्बद्धो विमुच्यते ॥ पुत्रदारमयैः पाशैर्बद्धो नैव विमुच्यते ॥ ३७ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः । ऐश्वर्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ३८ ॥ अपाये महतां मूर्ध्नि ते दिवैर्निपतन्त्यघवः । हन्त चित्त महत्तायाः कैष विश्वस्तता तव ॥ ३९ ॥ प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।

आमकुम्भइवाम्भःस्थो विशीर्णः सन्विभावते ॥ ४० ॥ यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति । विश्रम्य च पुनर्गच्छेत् तद्वद्भूतसमागमः ॥ ४१ ॥ पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ॥ स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ४२ ॥ अधः पश्यसि किं वृद्ध किंच ते पतितं भुवि । अरेमूढ नजानासि गतं मे यौवनं धनम् ॥ ४३ ॥ कायः सन्निहितापायः संपदा पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ४४ ॥ अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् । शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम् ॥ ४५ ॥ अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ ४६ ॥ यथा काष्ठं च काष्ठं च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ४७ ॥ त्वङ्मांस रुधिर स्नायुमेदोमज्जास्थि संहतौ ॥ विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ ४८ ॥ क धनानि महीपानां ब्रम्हणः क जगन्ति वा । प्राक्तनानि प्रयातानि केयं विश्वस्तता

तव ॥ ४९ ॥ अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् । लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ ५० ॥ जातस्य हि ग्रहरोगादिः कुमारस्य च मूर्खता । उपनीतेऽप्यविद्यात्वमनुद्वाहश्च पण्डिते ॥ ५१ ॥ यूनश्च परदारादिर्दारिद्र्यं च कुटुम्बिनः । पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥५२॥ बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते॥५३॥दुःखी दुःखाधिकान् पश्येत्सुखीपश्येत्सुखाधिकान् । आत्मानं हर्षशोकाभ्यां शत्रुभ्यामिव नार्पयेत् ॥ ५४ ॥ बिसमलमशनाय स्वादु पानाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च ।नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहेद्दुर्जनानाम् ॥ ५५ ॥ दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ ५६ ॥ पराद्भवन्ति वपुषः कति नामकीटायान्ययत्नतः खलु तनोरपसारयन्ति । मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥ ५७॥ अङ्गं गलितं पलितं मुण्डं

दशनविहीनं जातं तुण्डम्। वृद्धो याति गृहित्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥ ५८ ॥ महाबलान् पश्य महाऽनुभावान् प्रशास्य भूमिं धनधान्यपूर्णाम्। राज्यानि हित्वा विपुलांश्च भोगान् गतान्नरेन्द्रान्वशमन्तकस्य ॥ ५९ ॥ मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति। तं मुक्तकेशाः करुणं रुदन्ति, चितामध्ये काष्ठमिव क्षिपन्ति ॥ ६० ॥ अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून्। द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्टमानः ॥ ६१ ॥ अविदितपरमानन्दो वदति जनो विषयमेव रमणीयम्। तिलतैलमेव मृष्टं येन न दृष्टं घृतं क्वापि ॥ ६२ ॥ चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम्। तस्माच्चित्तं सर्वदा रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति॥६३॥अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा। तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ६४ ॥ श्रियो दो-

लालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं मह-
दपि धनं भूरिनिधनम् । बृहच्छोको लोकः सततमबला
दुःखबहुलास्तथाऽप्यस्मिन्घोरे पथि बत रता हन्त कु-
धियः ॥ ६५ ॥ नन्दन्ति मन्दाः श्रियमाप्य नित्यं
परं विषीदन्ति विपद्गृहीताः । विवेकदृष्ट्या चरतां
नराणां श्रियो न किंचिद्विपदो न किंचित् ॥ ६६ ॥
हरिष्यमाणो बहुधा परस्वं करिष्यमाणः सुतसंपदादि ।
धरिष्यमाणोऽरिशिरःसुपादं न स्वं मरिष्यन्तमवैति
कोऽपि ॥ ६७ ॥ मरणं प्रकृतिः शरीरिणां विकृतिर्जी-
वनमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्यदि जन्तु-
र्ननु लाभवानसौ ॥ ६८ ॥ नलिनीदलगतजल-
मतितरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याधि-
व्यालग्रस्तं लोकं शोकहतं च समस्तम् ॥ ६९ ॥ चेतो-
हरा युवतयः सुहृदोऽनुकूलाः सद्बान्धवाः प्रणयनम्रगि-
रश्च भृत्याः । गर्जन्ति दन्तिनिवहास्तरलास्तुरंगाः सं-
मीलने नयनयोर्नहि किंचिदस्ति ॥ ७२ ॥ मित्रंकल-
त्रमितरः परिवारलोको भोगैकसाधनमिमाः किल सं-

पदो नः । एकः क्षणः स तु भविष्यति यत्र भूयो नायं न यूयमितरे न वयं नचैते ॥ ७१ ॥ अहमिह कृतविद्यो वेदिता सत्कलानां धनपतिरहमेको रूपलावण्ययुक्तः । इतिकृतगुणगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किंचित् ॥ ७२ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ७३ ॥ अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥ ७४ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारितरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥ ७५ ॥ रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं किंवा प्राणसमासमागमसुखं नैवाधिकं प्रीत-

ये । किंतु भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छाया चञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ७६ ॥ भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् । लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ७७ ॥ भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः । कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ ७८ ॥ पुनः प्रभातं पुनरेव शर्वरी पुनः शशाङ्कः पुनरुद्यते रविः । कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥ ७९ ॥ किं ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरिष्यति । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥ ८० ॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥ ८१ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः ।

व्यासो वदत्यखिलवेदविशेषविज्ञो नारायणस्मरणहीन जनो जघन्यः ॥ ८२ ॥ रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो धावन्त्युद्यमिनस्तथैव निभृतं प्रारब्धतत्तत्क्रियाः ॥ व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ८३ ॥ ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्येकान्ततो निःस्पृहाः । न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥ ८४ ॥ धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायतामानन्दाश्रुजलं पिबन्ति शकुना निःशंकमङ्केशयाः । अस्माकं तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥ ८५ ॥ पाषाणखण्डेष्वपि रत्नबुद्धिः कान्तेति धीः शोणितमांसपिण्डे । पञ्चात्मके वर्ष्मणि चात्मभावो जयत्यसौ काचन मोहलीला ॥ ८६ ॥ कुटुम्बचिन्ताकुलितस्य पुंसः कुलं च शीलं च गुणाश्च सर्वे । अपक्वकुम्भे निहिता

इवापः प्रयान्ति देहेन समं विनाशम् ॥ ८७ ॥ निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् । अथ तस्य-कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥ ८८ ॥ व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम् । आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ८९ ॥ दधति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता। मनसि तत्त्वविदां तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ९० ॥ अवश्यं यातारश्चिरतरमुषित्वा-ऽपि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयम मून् । व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ९१ ॥ न संसारोत्पन्नं चरितमनुपश्यामि कुशलं विपाकः पुण्यानां जनयति भयं मे विमृशतः । महद्भिः पुण्यौघैश्चिरपरि-गृहीताश्च विषया महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ९२ ॥ धनं तावल्लब्धं कथमपि तथा-प्यस्य नियतं विनाशेऽलाभे वा तव सति वियोगोऽप्यु

भयथा । अनुत्पादः श्रेयान्किमु कथय तस्याथ विलयो विनाशो लब्धस्य व्यथयति तरां नत्वनुदयः ॥ १३ ॥ अतिक्रान्तः कालो ललितललनाभोगसुखदो भ्रमन्तः शान्ताः स्मः सुचिरमिह संसारसरणौ । इदानीं स्वः सिन्धोस्तटभुवि समाक्रन्दनगिरः सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ १४ ॥ महाशय्या भूमिर्मृणमुपधानं भुजलता वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः । स्फुरद्दीपश्चन्द्रः स्वधृतिवनितासङ्गमुदितः सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥ १५ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ १६ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ १७ ॥ भोगे रोगभयं कुले

च्युतिभयं वित्ते नृपालाद्भयं मौने दैन्यभयं बले रि-
पुभयं रूपे जराया भयम् । शास्त्रे वादभयं गुणे खल-
भयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं
भुवि नृणां वैराग्यमेवाभयम् ॥ ९८ ॥ याच्ञाशून्य-
मयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशव
स्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः । संसारार्ण-
वलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेष-
यतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ९९ ॥
पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखित
स्तद्दुःखादिकमार्जने तदनये तन्मूर्खतादुःखितः । जात-
श्चेत्सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः पुत्र-
व्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥ १०० ॥
धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी
सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजन मेते
यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥१०१॥
जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं पुत्रामि-

त्रमरातयो वसु बलं विद्या सुहृद्बान्धवाः ॥ चित्तस्पन्दितकल्पनामनुभवन्विद्वानविद्यामयीं निद्रामेत्य विघूर्णितो बहुविधान्स्वप्नानिमान्पश्यति ॥ १०२ ॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः । क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ १०३ ॥ पतत्यवश्यं हि विकृष्यमाणं कालेन यत्नादपि रक्ष्यमाणम् । वर्ष्मांशुना सिध्यति चेत्परार्थः स एव मर्त्यस्य परः पुमर्थः ॥ १०४ ॥ प्रबलानिलवेगवेल्लितध्वजचीनांशुककोटिचञ्चले । अपि मूढमतिः कलेवरे कुरुते कः स्थिरबुद्धिमम्बिके ॥ १०५ ॥ कति नाम सुता न लालिताः कति वा नेह वधूरभुञ्जिहि । क्व नु ते क्व च ताः क्व वा वयं भवसङ्गः खलु पान्थसंगमः ॥१०६॥ यथा प्रपायां बहवो मिलन्ते क्षणे द्वितीये बत भिन्नमार्गाः । प्रयान्ति तद्वद्बहुनामभाजो गृहे भवन्त्यत्र न कश्चिदन्ते ॥१०७॥ रेतोरक्तप्रसूतं जडमशनचितं षड्विकारं त्वगस्थिस्नायु-

क्रव्यान्त्रमज्जारुधिरमयमतिस्वल्पमाध्यामयाढ्यम् । प्रा-
णापाये मृदादिप्रतिममपि च विट्कीटभस्मावशेषं देहं
तं मूढ कस्मादहमिति मनुषे केन वा वञ्चितोऽसि ॥१०८॥
अमेध्यपूर्णं कृमिजालसंकुलं स्वभावदुर्गन्धमशौचमध्रु-
वम् । कलेवरं मूत्रपुरीषभाजनं रमन्ति मूढा न रमन्ति
पण्डिताः ॥ १०९ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु
मायारचितेषु मूढः । प्रलोभितात्मा ह्युपभोगबुद्ध्या
पतङ्गवन्नश्यति नष्टबुद्धिः ॥ ११० ॥ इह चेदवेदीदथ स-
त्यमस्ति न चेदवेदीन्महती विनष्टिः । भूतेषु भूतेषु वि-
चिन्त्य धीराः प्रेत्यास्मल्लोकादमृता भवन्ति ॥१११॥ अ-
जानन्दाहार्तिं पतति शलभस्तीव्रदहने न मीनोऽपिज्ञात्वा
बडिशयुतमश्नाति पिशितम् । विजानन्तोऽप्येते वयमिह
विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोह-
महिमा ॥ ११२ ॥ यतो यतो निवर्तते ततस्ततो विमु-
च्यते । निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि
॥ ११३ ॥ यदुपतेः क्व गता मथुरापुरी रघुपतेः क्व गतो-
त्तरकोशला । इति विचिन्त्य मनःस्थिरतां कुरु न सदि-

दं जगदित्यवधारय ॥ ११४ ॥ साधारणे वपुषि काक-
सृगालवन्हिमात्रादिकस्य ममतां त्यज दुःखहेतुम् ।
तद्वज्जहि बहिरर्थगतां च विद्वान् चित्तं बधान परमा-
त्मनि निर्विशङ्कम् ॥ ११५ ॥ यावत्स्वस्थमिदं शरीरम-
रुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता याव-
त्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः
प्रयत्नो महान्सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः
कीदृशः ॥ ११६ ॥ रोगा हरन्ति सततं प्रबलाः शरीरं
कामादयोऽप्यनुदिनं प्रदहन्ति चित्तम् । मृत्युश्च नृत्य-
ति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीन
बन्धो ॥ ११७ ॥ देहो विनश्यति सदा परिणामशील-
श्चित्तं च खिद्यति सदा विषयानुरागि । बुद्धिः सदा हि
रमते विषयेषु नान्तस्तस्मात्त्वमद्य० ॥ ११८ ॥ आयु-
र्विनश्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला बत
यौवनश्रीः । वृद्धा प्रधावति यथा मृगराजपत्नी तस्मा-
त्० ॥ ११९ ॥ सत्संगतीह विदिता तव भक्तिहेतुः
साऽप्यद्य नास्ति बत पण्डितमानिनो मे । तामन्तरेण न

हि सा क्व च बोधवार्ता तस्माद्० ॥ १२० ॥ दृष्टिर्न भूतविषया समताऽभिधाना वैषम्यमेव तदियं विषयी करोति । शान्तिः कुतो मम भवेत्समता न चेत्स्यात्तस्माद्० ॥ १२१ ॥ मैत्री समेषु न च ममास्ति कदाऽपि नाथ दीने तथा न करुणा मुदिता च पुण्ये । पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्माद्० ॥ १२२ ॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नान्तर्मुखं भवति तान्प्रविहाय तस्य । क्वान्तर्मुखत्वमपहाय सुखस्य वार्ता तस्माद्० ॥ १२३ ॥ ज्ञानं यथा मम भवेत्कृपया गुरूणां सेवा तथा न विधिनाऽकरवं हि तेषाम् । सेवाऽपि साधनतया विदिताऽस्ति वित्तेस्तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥ १२४ ॥

---

## कालचरित्रम् ३६

मातुलो यस्य गोविन्दः पिता यस्य धनंजयः । सोऽपि कालवशं प्राप्तः कालो हि दुरतिक्रमः ॥ १ ॥ पुरंदरसहस्राणि चक्रवर्तिशतानि च । निर्वापितानि

कालेन प्रदीपा इव वायुना ॥ २ ॥ म्रियमाणं मृतं बन्धुं शोचन्ते परिदेविनः । आत्मानं नानुशोचन्ति कालेन कवलीकृतम् ॥ ३ ॥ अद्यैव हसितं गीतं पठितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ ४ ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ ५ ॥ पण्डिते चैव मूर्खे च बलवत्यपि निर्बले । ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ ६ ॥ आसन्नतामेति मृत्युरायुर्याति दिने दिने । आघातं नीयमानस्य बध्यस्येव पदे पदे ॥ ७ ॥ कालः पचति भूतानि कालः संहरते तथा । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ मृत्युर्जन्मवतां वीर देहेन सह जायते । अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ९ ॥ को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका । वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ १० ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स वारिचर मोदते ॥ ११ ॥ अहन्यहनि भू-

तानि गच्छन्तीह यमालयम् । शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ १२ ॥ तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ १३ ॥ अस्मिन्महामोहमये कटाहे सूर्याग्निना रात्रिदिवेन्धनेन । मासर्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्ता ॥ १४ ॥ अशनं मे वसनं मे जाया मे बन्धु वर्गो मे । इति मे मे कुर्वाणं कालवृको हन्ति पुरुषाजम् ॥ १५ ॥ प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्धये । आयुर्गतप्रायमिदं यतोऽसौ विश्राम्य विश्राम्य न याति कालः ॥ १६ ॥ भगीरथाद्यः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च । युधिष्ठिराद्याश्च बभूवुरेते सत्यं क्व याता बत ते नरेन्द्राः ॥ १७ ॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि । इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥ १८ ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं वि-

चिन्तयति कोशगते द्विरेफे हा मूलतः कमलिनीं गजउ-
ज्जहार॥१९॥संचिन्त्यसचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यः
स्यविचक्षणस्य। वर्पाम्बुसिक्ता इव चर्मबन्धाः सर्वे मयत्ना
शिथिलीभवन्ति ॥ २० ॥ यत्रानेके क्वचिदपि गृहे तत्र
तिष्ठत्यथैको यत्राप्येकस्तदनुबहवस्तत्र नैकोऽपि चान्ते।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ, कालः
काल्या भुवनफलके क्रीडति प्राणिसारैः ॥ २१ ॥ भ्रातः
कष्टमहो महान्स नृपतिः सामन्तचक्रं च तत् पार्श्वे
तस्य च साऽपि राजपरिषत्ताश्चन्द्रबिम्बाननाः। उद्रिक्तः
स च राजपुत्रनिवहस्ते वन्दिमस्ताः कथाः सर्वं यस्य
वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ २२ ॥ व्यो-
मैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं बध्यन्ते
निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि। दुर्नीतं
किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः कालो
हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ २३ ॥ मा-
न्धाता स महीपतिः क्षितितलेऽलङ्कारभूतो गतः सेतु-
र्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः। अन्ये

लम् ॥ १२ ॥ ब्रह्मचर्यं परो धर्मःस चापि नियतस्त्वयि । यस्मात्तस्मादहं पार्थ रणेऽस्मिन्विजितस्त्वया ॥ १३ ॥ यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः । न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥ १४ ॥ स्वाध्यायशौचसंतोषतपांसि नियतात्मवान् । कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः ॥ १५ ॥ शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं मनः शुद्धिस्तथान्तरम् ॥ १६ ॥ मनःशौचं कर्मशौचं कुलशौचं च भारत । शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् ॥ १७ ॥ एकान्ते विजने देशे पवित्रे निरुपद्रवे । कम्बलाजिनवस्त्राणामुपर्यासनमभ्यसेत् ॥ ॥ १८ ॥ वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः । एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ॥ १९ ॥ उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् । शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ २० ॥ नोच्छ्वसेन्न च निःश्वसेन्नैव गात्राणि चालयेत् । एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ॥ २१ ॥ शब्दादिभ्यः प्रवृत्तानि

यदक्षाणि यतात्मभिः । प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥ २२ ॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः । बलादाहरणं तेषां प्रत्याहारः संउच्यते ॥ २३ ॥ मनसश्चेन्द्रियाणां च निग्रहः परमं तपः । स ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ २४ ॥ देशबन्धस्तु चित्तस्य धारणेतिप्रकीर्तिता । ध्यानशब्देन सा ज्ञेया या प्रत्ययैकतानता ॥ २५ ॥ सलिले सैन्धवं यद्वत्साम्यं भजति योगतः । तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ २६ ॥ राजत्वात्सर्वयोगानां राजयोग इति स्मृतः । राजन्तं दीप्यमानं तं परमात्मानमव्ययम् । प्रापयेद्देहिनां यस्तु राजयोगः सकीर्तितः॥२७॥ धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः । वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ २८ ॥ नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ २९ ॥ युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्ययोगो भवति दुःखहा ॥ ३० ॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।

अममत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ३१ ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ ३२ ॥ समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते ॥ ३३ ॥

---

## आशीर्वचनम्.

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥ १ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यपण्डितवरस्वामि-अच्युतानन्द नामधेयैः संगृहीता व्याख्यानमुक्तावली


### पुस्तकके मिलनेका ठिकाणा

मुंबई—नारायण रामचन्द्र सोहनी जगदीश्वर छापखानेके मालिक. क्रांदेवाडी, इनके पाससे.

तथा पण्डित ज्येष्ठाराम मुकुन्दजी जवेर बाग कालबादेवीरोड, मुंबई.

कच्छ मांडवीबंदर—भट गोवर्धन प्रेमजी विद्यार्थी संस्कृतपाठशाला, नवापुरा.